व्रजन्नुदपात्रस्योदपात्रेणाभिप्लावयति मुखं विमार्ष्टि ॥१३॥ एह यन्तु पशवः सं वो गोष्ठेन प्रजावतीः प्रजापतिरिति, गोष्ठकर्माणि ॥१४॥ गृष्टेः पीयूषं श्लेष्ममिश्रमश्नाति ॥१५॥ गां ददाति ॥१६॥ उदपात्रं निनयति ॥१७॥ समुह्य सव्येनाधिष्ठायार्धे दक्षिणेन विक्षिपति ॥१८॥ सारूपवत्से शकृत्पिण्डान् गुग्गुलुलवणे प्रतिनीय पश्चादग्नेर्निखनति ॥१९॥ तिसृणां प्रातरश्नाति ॥२०॥ विकृते संपन्नम् ॥२१॥ आयमगन्नयं प्रतिसरोऽयं मे वरणोऽरातीयोरिति मन्त्रोक्तान् वासितान् बध्नाति ॥२२॥ उत्तमस्य चतुरो जातरूपशकलेनानुसूत्रं गमयित्वावभुज्य त्रैधं पर्यस्यति ॥२३॥ एतमिध्ममित्युपसमाधाय ॥२४॥ तमिमं देवता इति वासितमुल्लुप्य ब्रह्मणा तेजसेति बध्नाति ॥२५॥ उत्तमो असीति मन्त्रोक्तम् ॥२६॥ अक्षितास्त इति यवमणिम् ॥२७॥ प्रथमा ह व्युवास सेत्यष्टकयाया वपां सर्वेण सूक्तेन त्रिर्जुहोति ॥२८॥ समवत्तानां स्थालीपाकस्य ॥२९॥ सहहुतानाज्यमिश्रान् हुत्वा पश्चादग्नेर्वाग्यतः संविशति ॥ ३० ॥ महाभूतानां कीर्तयन् संजिहीते ॥ ३१ ॥ ॥ १९ ॥

सीरा युञ्जन्तीति युगलाङ्गलं प्रतनोति ॥ १ ॥ दक्षिणमुष्टारं प्रथमं युनक्ति ॥ २ ॥ एहि पूर्णकेत्युत्तरम् ॥ ३ ॥ कीनाशा इतरान् ॥ ४ ॥ अश्विना फालं कल्पयतामुपावतु बृहस्पतिः, यथासद् बहुधान्यमयक्ष्मं बहुपूरुषमिति फालमतिकर्षति ॥ ५ ॥ इरावानसि धार्तराष्ट्रे तव मे सत्त्रे राध्यतामिति प्रतिमिमीते ॥ ६ ॥ अपहताः प्रतिष्ठा इत्यपूपैः प्रतिहत्य कृषति ॥ ७ ॥ सूक्तस्य पारं गत्वा प्रयच्छति ॥ ८ ॥ तिस्रः सीताः प्राचीर्गमयन्ति कल्याणीर्वाचो वदन्तः ॥ ९ ॥ सीते वन्दामहे त्वेत्यावर्तयित्वोत्तरस्मिन् सीतान्तेपुरोडाशेनेन्द्रं यजते ॥१०॥ अश्विनौ स्थालीपाकेन ॥ ११ ॥ सीतायां संपातानानयति[1] ॥ १२ ॥ उदपात्र उत्तरान् ॥१३॥ शष्पहविषामवधाय ॥१४॥ सर्वमनक्ति ॥१५॥ यत्र संपातानानयति ततो लोष्टं धारयन्तं पत्नी पृच्छत्यकृक्षतेति ॥१६॥ अकृक्षामेति ॥१७॥ किमाहार्षीरिति ॥१८॥ वित्तिं भूतिं पुष्टिं प्रजां पशूनन्नमन्नाद्यमिति ॥१९॥ उत्तरतो मध्यमायां निवपति ॥२०॥ अभ्यज्योत्तरफालं प्रातरायोजनाय निदधाति ॥२१॥ सीताशिरःसु दर्भानास्तीर्य, प्लक्षोदुम्बरस्य, त्रींस्त्रींश्चमसान्निदधाति ॥२२॥ रस-

---

१ B °नयन्ति

वतो दक्षिणे शष्पवतो मध्यमे पुरोडाशवत उत्तरे ॥२३॥ दर्भान् प्रत्यवभुज्य संवपति ॥२४॥ सारूपवत्से शकृतिपिण्डान् गुग्गुलु-लवणे अतिनीयाश्नाति[1] ॥ २५॥ अनडुत्सांपदम् ॥ २६ ॥ ॥ २० ॥

पयस्वतीरिति स्फातिकरणम् ॥ १ ॥ शान्तफलशिलाकृतिलोष्टवल्मीकराशिवापं त्रीणि कूदीप्रान्तानि मध्यमपलाशे दर्भेण परिवेष्ट्य राशिपल्येषु करोति ॥ २ ॥ प्रतिसायं[2] भुञ्जते ॥ ३ ॥ प्रत्यावपन्ति शेषम् ॥ ४ ॥ आ भक्तयातनात् ॥ ५ ॥ अनुमन्त्रयते ॥ ६ ॥ अयं नो नभसस्पतिरिति, पल्येऽश्मानं संप्रोक्ष्यान्वृचं काशीनोप्यावापयति ॥ ७ ॥ आ गाव इति गा आयतीः प्रत्युत्तिष्ठति ॥ ८ ॥ प्रावृषि प्रथमधारस्येन्द्राय त्रिर्जुहोति ॥ ९ ॥ प्रजावतीरिति प्रतिष्ठमाना अनुमन्त्रयते ॥१०॥ कर्कीप्रवादानां द्वादशदाम्न्यां संपातवत्यामयं घास इह वत्सामिति मन्त्रोक्तम् ॥११॥ यस्ते शोकायेति वस्त्रसांपदी ॥१२॥ तिस्रः कूदीमयीरूर्णनाभिकुलायपरिहिता अन्वक्ता आदधाति ॥१३॥ अत्यन्तेषीका मौञ्जपरिहिता मधुना प्रलिप्य चिक्कशेषु पर्यस्य ॥१४॥ उत पुत्र इति ज्येष्ठं पुत्रमवसाययति ॥१५॥ मितशरणः सांपदं कुरुते ॥१६॥ अर्धमर्धेनेत्यार्द्रपाणी रसं ज्ञात्वा प्रयच्छति ॥१७॥ शान्त-शाखया प्राग्भागमपाकृत्य ॥१८॥ प्रत्यग्नि परिचृतति ॥१९॥ तस्या अमावास्यायां तिस्रः प्रादेशमात्रीरादधाति ॥२०॥ त्वे ऋतु-मिति रसप्राशनी ॥ २१ ॥ रसकर्माणि कुरुते ॥ २२ ॥ स्तुष्व वर्ष्मन्निति प्राजापत्यामावास्यायामस्तमिते वल्मीकशिरसि दर्भा-वस्तीर्णेऽध्यधि दीपं धारयंस्त्रिर्जुहोति ॥ २३ ॥ तण्डुलसंपातानानीय रसैरुपसिच्याश्नाति ॥ २४ ॥ एवं पौर्णमास्याज्यो-पसिक्तान्[3] ॥ २५ ॥ ॥ २१ ॥

ऋधङ्मन्त्रस्तदिदासेति मैश्रधान्यं भृष्टपिष्टं लोहितालंकृतं रसमिश्रमश्नाति ॥ १ ॥ अभृष्टं प्लक्षोदुम्बरस्योत्तरतोऽग्नेस्त्रिषु चमसेषु पूर्वाह्णस्य तेजसाग्रमन्नस्य प्राशिषमिति पूर्वाह्णे ॥ २ ॥ मध्यंदिनस्य तेजसा मध्यमन्नस्य प्राशिषमिति मध्यंदिने ॥ ३ ॥ अपराह्णस्य तेजसा सर्वमन्नस्य प्राशिषमित्यपराह्णे ॥ ४ ॥ ऋतुमत्याः स्त्रिया अङ्गुलिभ्यां लोहितम् ॥ ५ ॥ यत् क्षेत्रं कामयते

१ B प्रतिनीया°  २ B सायं  ३ B पौर्णमास्याज्योतान्

तस्मिन् कीलालं दधिमधुमिश्रम् ॥ ६ ॥ संवत्सरं स्त्रियमनुपेत्य शुक्त्यां रेत आनीय तण्डुलमिश्रं सतग्रामम् ॥ ७ ॥ द्वादशीममावास्येति क्षीरभक्षो भवत्यमावास्यायां दधिमधुभक्षस्तस्य मूत्र उदकदधिमधुपलपूलनान्यासिच्य ॥ ८ ॥ क्रव्यादं नाडी प्र विवेशाग्निं प्रजाभाङ्गिरतो माययैतौ । आवां देवी जुषाणे घृताची इममन्नाद्याय प्र विशतं स्वाहेति ॥ ९ ॥ निशायामाग्रयणतण्डुलानुदङ्क्यां[1] मधुमिश्रान् निदधात्या यवानां पक्तेः[2] ॥ १० ॥ एवं यवानुभयान् समोप्य ॥ ११ ॥ त्रिवृति गोमयपरिचये शृतमश्नाति ॥१२॥ समृद्धमिति काङ्कायनः ॥१३॥ ममाग्ने वर्च इति सात्त्रिकानग्नीन् दर्भपूतीकभाङ्गाभिः परिस्तीर्य गार्हपत्यशृतं सर्वेषु संपातवन्तं गार्हपत्येऽश्नाति[3] ॥१४॥ एवं पूर्वस्मिन्नपरयोरुपसंहृत्य ॥१५॥ एवं द्रोणकलशे रसानुक्तम् ॥ १६ ॥ ॥ २२ ॥

यजूंषि यज्ञ इति नवशालायां सर्पिर्मधुमिश्रं जुहोति[4] ॥ १ ॥ दोषो गायेति द्वितीयाम् ॥ २ ॥ युक्ताभ्यां तृतीयाम् ॥ ३ ॥ आनुमतीं चतुर्थीम् ॥ ४ ॥ शालामङ्गुलिभ्यां संप्रोक्ष्य गृहपत्न्यासाद उपविश्योदपात्रं निनयति ॥ ५ ॥ इहैव स्तेति वाचं विसृजते ॥ ६ ॥ ऊर्ध्वा अस्येति वार्ष्मणमौदुम्बरं मन्थप्रतिरूपमभि जुहोति ॥ ७ ॥ असंख्याता अधिकृत्य सतागमशष्कुलीः ॥ ८ ॥ त्वष्टा म इति प्रातर्विभङ्क्ष्यमाणोऽश्नाति[5] ॥ ९ ॥ ज्यायुं बध्नाति ॥१०॥ दण्डं संपातवन्तं विमृज्य धारयति ॥११॥ वायुरेना इति युक्तयोश्चित्राकर्मनिशायां संभारान् संपातवतः करोति ॥१२॥ अपरेद्युर्वायुरेना इति शाखयोदकधारया गाः परिक्रामति ॥१३॥ प्रथमजस्य शकलमवधायौदुम्बरेणासिना लोहितेनेति मन्त्रोक्तम् ॥ १४ ॥ यथा चक्रुरितोऽशुकाशकाण्डया लोहितं निर्मृज्य रसमिश्रमश्नाति ॥१५॥ सर्वमौदुम्बरम् ॥१६॥ यस्येदमा रज इत्यायोजनानामभ्ययः ॥ १७ ॥ ॥ २३ ॥

उच्छ्रयस्वेति बीजोपहरणम् ॥१॥ आज्यमिश्रान् यवानुर्वरायां कृष्टे फालेनोदुह्य[6] काशीन् निनयति निवपति ॥२॥ अभि त्यमिति महावकाशेऽरण्य उन्नते विमिते प्राग्द्वारे प्रत्यग्द्वारे वाप्सु[7] संगातानानयति ॥३॥ कृष्णाजिने सोमांशून् विचिनोति ॥४॥ सोममिश्रेण संपातवन्तमश्नाति ॥ ५ ॥ आदीप्ते संपन्नम् ॥ ६ ॥ तां सवितरिति गृष्टिदाम बध्नाति ॥ ७ ॥ सं मा सिञ्चन्त्विवति सर्वोदके मैश्रधान्यम् ॥ ८ ॥ दिव्यं सुपर्णमित्यृषभदण्डिनो वपयेन्द्रं यजते ॥ ९ ॥ अनुबद्धशिरःपादेन गोशालां चर्मणावच्छाद्य,

१ B °नुदक्यान् २ B पङ्क्तेः ३ B गार्हपत्यदेशेऽश्नाति ४ B °श्रमश्नाति ५ B प्रातर्विभुङ्क्ष्य° ६ B °दुह्यान्वृचं ७ B प्राग्द्वारप्रत्यग्द्वारेष्वप्सु

अवदानकृतं ब्राह्मणान् भोजयति ॥ १० ॥ प्रोष्य समिध आदायोर्जं बिभ्रदिति गृहसंकाशे जपति ॥ ११ ॥ सव्येन समिधो दक्षिणेन शालावलीकं संस्तभ्य जपति ॥ १२ ॥ अतिव्रज्य समिध आधाय, सुमङ्गलि प्रजावति सुसोमे अहं वां गृहपतिर्जीव्यासमिति स्थूणे गृह्णाति, उपतिष्ठते ॥ १३ ॥ यद्वदामीति मन्त्रोक्तम् ॥ १४ ॥ गृहपत्न्यासाद उपविश्योदपात्रं निनयति ॥ १५ ॥ इहैव स्तेति प्रवत्स्यन्नवेक्षते ॥ १६ ॥ सूयवसादिति सूयवसे पशून् निष्ठापयति ॥ १७ ॥ दूर्वाग्रैरञ्जलावप आनीय दर्श दार्शीभिरुपतिष्ठते ॥१८॥ इन्द्रस्य कुक्षिः साहस्र इत्यृषभं संपातवन्तमतिसृजति ॥१९॥ रेतोधायै त्वातिसृजामि वयोधायै त्वातिसृजामि यूथत्वायै त्वातिसृजामि गणत्वायै त्वातिसृजामि सहस्रपोषायै त्वातिसृजाम्यपरिमितपोषायै त्वातिसृजामि ॥ २० ॥ एतं वो युवानमिति पुराणं प्रवृत्य नवमुत्सृजते संप्रोक्षति ॥ २१ ॥ उत्तरेण पुष्टिकाम ऋषभेणेन्द्रं यजते ॥ २२ ॥ संपत्कामः श्वेतेन पौर्णमास्याम् ॥ २३ ॥ सत्यं बृहदित्याग्रहायण्याम् ॥ २४ ॥पश्चादग्नेर्दर्भेषु खदायां सर्वहुतम् ॥ २५ ॥ द्वितीयं संपातवन्तम्, अश्नाति ॥ २६ ॥ तृतीयस्यादितः सप्तभिर्भूमे मातरिति त्रिर्जुहोति ॥ २७ ॥ पश्चादग्नेर्दर्भेषु कशिप्वास्तीर्य विमृग्वरीमित्युपविशति ॥ २८ ॥ यास्ते शिवा इति संविशति ॥ २९ ॥ यच्छयान इति पर्यावर्तते ॥ ३० ॥ नवभिः शन्तिवेति दशम्योदायुषेत्युपोत्तिष्ठति ॥ ३१ ॥ उद्वय-मित्युत्क्रामति ॥ ३१ ॥ उदीराणा इति त्रीणि पदानि प्राङ्वा, उदङ्वा, बाह्येनोपनिष्क्रम्य यावत्त इति, वीक्षते ॥ ३३ ॥ उन्नताच्च ॥३४॥ पुरस्तादग्नेः सीरं युक्तमुदपात्रेण संपातवतावसिञ्चति ॥३५॥ आयोजनानामप्ययः ॥३६॥ यस्यां सदोहविर्धाने इति जुहोति वरो म आगमिष्यतीति ॥ ३७ ॥ यस्यामन्नमित्युपतिष्ठते ॥ ३८ ॥ निधिं बिभ्रतीति मणिहिरण्यकामः[1] ॥ ३९ ॥ एवं विश्वा ॥ ४० ॥ यस्यां कृष्णमिति वार्षकृतस्याचामति शिरस्यानयते ॥ ४१ ॥ यं त्वा पृषती रथ इति द्यौः पृषत्यादित्यो रोहितः ॥ ४२ ॥ पृषतीं गां ददाति ॥४३॥ पृषत्याः क्षीरौदनं सर्वहुतम् ॥ ४४ ॥ पुष्टिकर्मणामुपधानोपस्थापनम् ॥ ४५ ॥ सलिलैः सर्वकामः सलिलैः सर्वकामः ॥ ४६ ॥ ॥ २४ ॥

इत्यथर्ववेदे कौशिकसूत्रे तृतीयोऽध्यायः समाप्तः ॥

---

१ B मणिं हिरण्य॰

अथ भैषज्यानि ॥ १ ॥ लिङ्ग्युपतापो भैषज्यम् ॥ २ ॥ वचनादन्यत् ॥३॥ पूर्वस्योदपात्रेण संपातवताऽङ्क्ते ॥ ४ ॥ वलीर्विमार्ष्टि ॥ ५॥ विद्मा शरस्यादो यदिति मुञ्जशिरो रज्ज्वा बध्नाति ॥ ६ ॥ आकृतिलोष्टवल्मीकौ परिलिख्य पाययति ॥ ७॥ सर्पिषाऽऽलिम्पति ॥८॥ अपिधमति ॥९॥ विद्मा शरस्येति प्रमेहणं बध्नाति ॥१०॥ आखुकिरिपूतीकमथितजरत्प्रमन्दसाव्रस्कान् पाययति ॥ ११ ॥ उत्तमाभ्यामास्थापयति ॥ १२ ॥ यानमारोहयति ॥ १३ ॥ इषुं विसृजति ॥ १४ ॥ बस्तिं विष्यति ॥ १५ ॥ वर्त्रे भिनत्ति[1] ॥ १६ ॥ एकविंशतिं यवान् दोहन्यामद्भिरानीय द्रुघ्नीं जघने संस्तभ्य फलतोऽवसिञ्चति ॥ १७॥ आलबिसोलं फाण्टं पाययति ॥ १८ ॥ उदावर्तिने च ॥१९॥ अम्बयो यन्ति वायोः पूत इति च शान्ताः ॥२०॥ उत्तरस्य ससोमाः ॥२१॥ वातनानामपनोदनेन व्याख्यातम् ॥ २२ ॥ त्रपुसमुसलखदिरतार्ष्टाघानामादधाति ॥ २३ ॥ अयुग्मान् खादिराञ्छङ्कूनक्ष्यौ निविध्येति पश्चादग्नेः समंभूमि निहन्ति ॥ २४ ॥ एवमायसलोहान् ॥ २५ ॥ तप्तशर्कराभिः शयनं राशिपल्यानि[2] परिकिरति ॥ २६ ॥ अमावास्यायां सकृद्गृहीतान् यवाननपहतानप्रतीहारं पिष्टानाभिचारिकं[3] परिस्तीर्य तार्ष्टाघेध्म आवपति ॥ २७ ॥ य आगच्छेत् तं ब्रूयाच्छणशुल्बेन जिह्वां निर्मृजानः शालायाः प्रस्कन्द इति[4] ॥ २८ ॥ तथा कुर्वन्नना, आद्ये ह्नुवाने ॥ २९ ॥ वीरिणतूलमिश्रमिङ्गिडं प्रपुटेन[5] जुहोति ॥ ३० ॥ इध्माबर्हिः शालायामासजति ॥३१॥ अपरेद्युर्विकृते पिशाचतो रुगिति[6] ॥ ३२ ॥ उक्तो होमः ॥ ३३ ॥ वैश्रवणायाञ्जलिं कृत्वा जपन्नाचामयत्यभ्युक्षति[7] ॥ ३४ ॥ निरयुल्मुके संकर्षति ॥ ३५ ॥ स्वस्त्याद्यं कुरुते ॥ ३६ ॥ अयं देवानामित्येकविंशत्या दर्भपिञ्जूलीभिर्वलीकैः सार्धमधिशिरोऽवसिञ्चति ॥ ३७ ॥ ॥ २५ ॥

जरायुज इति मेदो मधु सर्पिस्तैलं पाययति ॥ १ ॥ मौञ्जप्रश्नेन शिरस्यपिहितः सव्येन तितउनि पूल्यानि धारयमाणो दक्षिणेनावकिरन् व्रजति ॥ २ ॥ सव्येन तितउप्रश्नौ, दक्षिणेन ज्यां द्रुघ्नीम् ॥ ३ ॥ प्रैषकृदग्रतः ॥ ४ ॥ यत्रैतं व्याधिर्गृह्णाति तत्र तितउप्रश्नौ निदधाति ॥ ५ ॥ ज्यां च ॥ ६ ॥ आव्रजनम् ॥ ७ ॥ घृतं नस्तः ॥ ८ ॥ पञ्चपर्वणा ललाटं संस्तभ्य जपति, अमूर्या इति ॥ ९ ॥ पञ्चपर्वणा, पांसुसिकताभिः परिकिरति ॥१०॥ अर्मकपालिकां बध्नाति ॥ ११ ॥ पाययति ॥१२॥ चतुर्भिर्दूर्वाग्रैः,

१ B वर्ति विभेत्ति २ B °ल्याणि ३ B °हारपिष्टा° ४ B प्रस्कन्देति ५ B प्रपुटे ६ B रुजति ७ B जपन्नाचमय°

दधिपललं पाययति ॥१३॥ अनु सूर्यमिति मन्त्रोक्तस्य लोममिश्रमाचामयति [1] ॥१४॥ पृष्ठे चानीय ॥१५॥ शङ्कुधानं चर्मण्यासीनाय दुग्धे संपातवन्तं बध्नाति ॥१६॥ पाययति ॥१७॥ हरिद्रौदनभुक्तमुच्छिष्टानुच्छिष्टेना प्रपदात् प्रलिप्य मन्त्रोक्तानधस्तल्पे हरितसूत्रेण सव्यजङ्घासु बद्ध्वावस्थापयति ॥ १८ ॥ प्रपादयति ॥ १९ ॥ वदत उपस्थापयति ॥ २० ॥ क्रोडलोमानि जतुना संदिह्य जातरूपेणापिधाप्य ॥ २१ ॥ नक्तं जाता सुपर्णो जात इति मन्त्रोक्तं शकृताऽऽ[2] लोहितं प्रकृष्यालिम्पति[3] ॥ २२ ॥ पलितान्याच्छिद्य ॥२३॥ मारुतान्यपीतः[4] ॥२४॥ यदग्निरिति परशुं जपंस्तापयति क्काथयत्यवसिञ्चति ॥२५॥ उप प्रागादित्युद्विजमानस्य शुक्लप्रसूनस्य वीरिणस्य चतसृणामिषीकाणामुभयतः प्रत्युष्टं बध्नाति ॥२६॥ त्रिविदग्धं काण्डमणिम् ॥२७॥ उल्मुके स्वस्त्याद्यम् ॥२८॥ मातृनाम्नोः सर्वसुरभिचूर्णान्यन्वक्तानि हुत्वा शेषेण प्रलिम्पति ॥२९॥ चतुष्पथे च शिरसि दर्भेण्ड्वेऽङ्गारकपाले अन्वक्तानीति[5] ॥ ३० ॥ तितउनि प्रतीपं गाहमानो वपतीतरोऽवसिञ्चति पश्चात् ॥३१॥ आमपात्र ओप्यासिच्य मौञ्जे त्रिपादे वयोनिवेशने प्रबध्नाति ॥३२॥ अघद्विष्टा शं नो देवी वरणः पिप्पली विद्रधस्य या बभ्रव इति ॥३३॥ उपोत्तमेन पलाशस्य चतुरङ्गुलेनालिम्पति ॥३४॥ प्रथमेन मन्त्रोक्तं बध्नाति ॥३५॥ द्वितीयेन मन्त्रोक्तस्य संपातवतानुलिम्पति ॥३६॥ तृतीयेन मन्त्रोक्तं बध्नाति ॥३७॥ चतुर्थेनाशयति ॥३८॥ पञ्चमेन वरुणगृहीतस्य मूर्ध्नि संपातानानयति ॥ ३९ ॥ उत्तमेन शाकलम् ॥ ४० ॥ उदगातामित्याप्लावयति बहिः ॥ ४१ ॥ अपेयमिति व्युच्छन्त्याम् ॥ ४२ ॥ बभ्रोरिति मन्त्रोक्तमाकृतिलोष्टवल्मीकौ परिलिख्य जीवकोषण्यामुत्सीव्य बध्नाति ॥४३॥ ॥२६॥

नमस्ते लाङ्गलेभ्य इति सीरयोगमधिशिरोऽवसिञ्चति ॥ १ ॥ नमः सनिस्रसाक्षेभ्य इति शून्यशालायामप्सु संपातानानयति ॥ २ ॥ उत्तरं जरत्खाते सशालातृणे ॥ ३ ॥ तस्मिन्नाचामयति,[1] आप्लावयति ॥ ४ ॥ दशवृक्षेति शाकलः ॥ ५ ॥ दश सुहृदो जपन्तोऽभिमृशन्ति ॥ ६ ॥ क्षेत्रियात्त्वेति चतुष्पथे काम्पीलशकलैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति ॥ ७ ॥ अवसिञ्चति ॥ ८ ॥ पार्थिवस्येत्युद्यति पृष्ठसंहितावुपवेशयति ॥ ९ ॥ प्राङ्मुखं व्याधितं प्रत्यङ्मुखमव्याधितं शाखासूपवेश्य वैतसे

१ B °न्नाचमयति २ B शकृदा ३ B प्रघृष्या° ४ B °न्यपिहितः ५ B अन्वक्तानि ६ B °चमयति

चमस उपमन्थनीभ्यां तृणागृहीतस्य शिरसि मन्थमुपमथ्यातृषिताय प्रयच्छति ॥१०॥ तस्मिंस्तृणां संनयति ॥ ११ ॥ उद्धृतमुदकं पाययति ॥१२॥ सवासिनाविति मन्त्रोक्तम् ॥१३॥ इन्द्रस्य या महीति खल्वानलगण्डुहननान्[१] घृतमिश्राञ्जुहोति ॥१४॥ बालान् कल्माषे काण्डे सव्यं परिवेष्ट्य संभिनत्ति ॥१५॥ प्रतपति ॥१६॥ आदधाति ॥ १७॥ सव्येन दक्षिणामुखः पांसूनुपमथ्य परिकिरति ॥ १८ ॥ संमृद्नाति ॥ १९ ॥ आदधाति ॥२०॥ उद्यन्नादित्य इत्युद्यति गोनामेत्याहासाविति ॥ २१ ॥ सूक्तान्ते ते हता इति ॥२२॥ प्राचीं[२] दर्भैरभ्यस्यति ॥२३॥ मध्यन्दिने च ॥२४॥ प्रतीचीमपराह्णे ॥२५ ॥ बालस्तुकामाच्छिद्य खल्वादीनि ॥२६॥ अक्षीभ्यां त इति वीबर्हम् ॥२७॥ उदपात्रेण संपातवतावसिञ्चति ॥२८॥ हरिणस्येति बन्धनपायनाचमनशङ्कुधानावज्वाले-नावनक्षत्रे[३]ऽवसिञ्चति ॥२९॥ अमितमात्रायाः सकृद्गृहीतान् यवानावपति ॥३०॥ भक्तं प्रयच्छति ॥ ३१ ॥ मुञ्चामि त्वेति ग्राम्ये पूतिशफरीभिरोदनम् ॥३२॥ अरण्ये तिलशाणगोमयशान्तावज्वालेनावनक्षत्रे[४]ऽवसिञ्चति ॥३३॥ मृगारैर्मुञ्चेत्याप्लावयति ॥ ३४ ॥ ॥ २७ ॥

ब्राह्मणो जज्ञ इति तक्षकायाञ्जलिं कृत्वा जपन्नाचमयत्यभ्युक्षति ॥ १ ॥ क्रमुकशकलं संक्षुद्य दूर्शजरदजिनावकराव-ज्वालेन[५] ॥ २ ॥ संपातवत्युदपात्र ऊर्ध्वफलाभ्यां दिग्धाभ्यां मन्थमुपमथ्य रविधारणापिण्डानन्वृचं[६] प्रकीर्य छर्दयते ॥ ३ ॥ हरिद्रां सर्पिषि पाययति ॥ ४ ॥ रोहिणीत्यवनक्षत्रे[७]ऽवसिञ्चति ॥ ५ ॥ पृषातकं पाययति, अभ्यनक्ति ॥ ६ ॥ आ पश्यतीति सदंपुष्पामणिं बध्नाति ॥७॥ भवाशर्वाविति सप्त काम्पीलपुटानपां पूर्णान् संपातवतः कृत्वा दक्षिणेनावसिच्य पश्चादपविध्यति ॥ ८ ॥ त्वया पूर्वमिति कोशेन, शमीचूर्णानि भक्ते ॥ ९ ॥ अलंकारे ॥१०॥ शालां परितनोति ॥११॥ उतामृतासुरित्यमति-गृहीतस्य भक्तं प्रयच्छति ॥ १२ ॥ कुष्ठलिङ्गाभिर्नवनीतमिश्रेणाप्रतीहारं प्रलिम्पति ॥१३॥ लाक्षालिङ्गाभिर्दुग्धे फाण्टान् पाययति

१ B खल्वङ्गानलाण्डून् हननान् २ Wantig in B ३ B शङ्कुधानज्वाले° ४ B °शान्ताज्वाले° ५ B ° नावकरज्वालेन
६ B °धारणपिण्डा° ७ B रोहणी°

॥१४॥ ब्रह्म जज्ञानमिति सूतिकारिष्टकौ प्रपादयति ॥ १५॥ मन्थाचमनोपस्थानमादित्यस्य ॥१६॥ दिवे स्वाहेमं यवमिति चतुर उदपात्रे संपातानानयति ॥१७॥ द्वौ पृथिव्याम् ॥१८॥ तौ प्रत्याहृत्याप्लावयति ॥१९॥ सयवे चोत्तरेण यवं बध्नाति ॥२०॥ ॥२८॥

दर्दिर्हीति तक्षकायेत्युक्तम् ॥ १ ॥ द्वितीयया ग्रहणी ॥ २ ॥ सव्यं परिक्रामति ॥ ३॥ शिखां सिचि[1] स्तम्बानुद्ग्रथ्नाति ॥ ४ ॥ तृतीयया प्रसर्जनी ॥ ५ ॥ चतुर्थ्या दक्षिणमपेह्नीति दंश्म तृणैः प्रकर्ष्याहिमभिनिरस्यति ॥ ६ ॥ यतो दष्टः ॥ ७ ॥ पञ्चम्या वलीकपललावज्वालेन[2] ॥ ८ ॥ षष्ठ्यार्त्नीज्यापाशेन ॥ ९ ॥ द्वाभ्यां मधूद्रापान् पाययति ॥१०॥ नवम्या श्वावित्पुरीषम् ॥११॥ त्रिःशलल्या[3] मांसं प्राशयति ॥१२॥ दशम्यालाबुनाचमयति ॥१३॥ एकादश्या नाभिं बध्नाति ॥ १४॥ मधुलावृषलिङ्गाभिः खलतुलपर्णीं संक्षुद्य मधुमन्थे पाययति ॥१५॥ उत्तराभिर्भुङ्क्ते ॥१६॥ द्वारं सृजति ॥१७॥ अग्निस्तक्मानमिति लाजान् पाययति ॥१८॥ दावे लोहितपात्रेण मूर्ध्नि संपातानानयति ॥१९॥ ओते म इति करीरमूलं काण्डेनैकदेशम् ॥२०॥ ग्रामात् पांसून् ॥ २१ ॥ पश्चादग्नेर्मातुरुपस्थे मुसलबुध्नेन नवनीतान्वक्तेन त्रिः प्रतीहारं तालुनि तापयति ॥२२॥ शिग्रुभिर्नवनीतमिश्रैः प्रदेग्धि ॥ २३ ॥ एकविंशतिमुशीराणि भिनद्मीति मन्त्रोक्तम् ॥२४॥ उशीराणि प्रयच्छति ॥२५॥ एकविंशत्या सहाप्लावयति ॥२६॥ आ यं विशन्तीति वयोनिवेशनशृतं क्षीरौदनमश्नाति ॥२७॥ परि द्यामिवेति मधुशीपं[4] पाययति ॥२८॥ जपंश्च ॥२९॥ अस्थिस्रंसमिति शकलेनाप्स्विवटे संपातवताऽवसिञ्चति ॥ ३० ॥ ॥ २९ ॥

आवयो इति सार्षपं तैलं संपातवन्तं[5] बध्नाति ॥ १ ॥ काण्डं प्रलिप्य ॥ २ ॥ पृक्तं शाकं प्रयच्छति ॥ ३ ॥ चत्वारि शाकफलानि प्रयच्छति ॥ ४ ॥ क्षीरलेहमाङ्क्ते ॥ ५ ॥ अश्नाति ॥ ६ ॥ अग्नेरिवेत्युक्तं दावे ॥ ७ ॥ इमा यास्तिस्र इति वृक्षभूमौ जातावज्वालेनावसिञ्चति[6] ॥ ८ ॥ शीर्षफाण्टाक्षैः ॥ ९ ॥ निकटाभ्याम् ॥१०॥ कृष्णं नियानमित्योषध्याभिश्चोतयते ॥११॥ मारुतानामप्ययः ॥ १२ ॥ हिमवत इति स्यन्दमानादन्वीपमाहार्य वलीकैः ॥ १३ ॥ पञ्च च या इति पञ्चपञ्चाशतं परशुपर्णान्

---

१ B शिखासिचि २ B °पललज्वालेन ३ B त्रिःशुक्लया ४ B मधु शीभं ५ B तैलसंपातं ६ B जाताज्वाले°

काष्ठैरादीपयति ॥ १४ ॥ कपाले प्रशृतं काष्ठेनालिम्पति ॥ १५ ॥ किंस्त्यश्वजाम्बीलोदकरक्षिकामशकादीभ्यां[1] दंशयति ॥ १६ ॥ निश्यव मा पाप्मन्निति तितउनि पूल्यान्यवसिच्यापविध्य ॥ १७ ॥ अपरेद्युः सहस्राक्षायाप्सु बलींस्त्रीन् पुरोडाशसंवर्तांश्चतुष्पथेऽवक्षिप्यावकिरति ॥ १८ ॥ ॥ ३० ॥

यस्ते मद इति शमीलूनपापलक्षणयोः शमीशमकेनाभ्युद्य[2] वापयति ॥ १ ॥ अधिशिरः ॥ २ ॥ अन्तर्दाव इति समन्तमग्नेः कर्ष्वामुष्णपूर्णायां जपंस्त्रिः परिक्रम्य पुरोडाशं जुहोति ॥३॥ प्राग्नये प्रेत इत्युपदधीत ॥४॥ वैश्वानरीयाभ्यां पायनानि ॥५॥ अस्थाद् द्यौरित्यपवातायाः स्वयंस्रस्तेन गोशृङ्गेण संपातवता, जपन् ॥ ६ ॥ यां ते रुद्र इति शूलिने शूलम् ॥ ७ ॥ उत्सूर्य इति शमीबिम्बशीर्षपर्ण्यावधि[3] ॥ ८ ॥ द्यौश्च म इत्यभ्यज्यावमार्ष्टि ॥ ९ ॥ स्थूणायां निकर्षति ॥१०॥ इदमिद्वा इत्यक्षतं मूत्रफेनेनाभ्युद्य ॥११॥ प्रक्षिपति ॥१२॥ प्रक्षालयति ॥१३॥ दन्तरजसावदेग्धि ॥१४॥ स्तम्बरजसा ॥१५॥ अपचित आ सुस्रस इति किंस्त्यादीनि ॥१६॥ लोहितलवणं संक्षुद्याभिनिष्ठीवति ॥१७॥ अन्तरिक्षेणेति पक्षहतं मन्त्रोक्तं चङ्क्रमया ॥१८॥ कीटेन धूपयति ॥१९॥ ग्लौरित्यक्षतेन ॥२०॥ वीहि स्वामित्यज्ञातारुः शान्त्युदकेन प्रक्षाल्य[4] मनसा संपातवता ॥२१॥ या ओषधय इति मन्त्रोक्तस्यौषधीभिर्धूपयति ॥२२॥ मधूदश्वित् पाययति ॥२३॥ क्षीरोदश्वित् ॥२४॥ उभयं च ॥२५॥ देवा अदुरिति वल्मीकेन बन्धनपायनाचमनप्रदेहनमुष्णेन ॥२६॥ यथा मनोऽव दिव इत्यरिष्टेन ॥२७॥ देवी देव्यां यां जमदग्निरिति मन्त्रोक्ताफलं जीव्यलाकाभ्याममावास्यायां कृष्णवसनः कृष्णभक्षः पुरा काकसंपातादवनक्षत्रेऽवसिञ्चति ॥२८॥ ॥३१॥

यस्ते स्तन इति जम्भगृहीताय स्तनं प्रयच्छति ॥१॥ प्रियङ्गुतण्डुलानभ्यवदुग्धान् पाययति ॥२॥ अग्नाविष्णू सोमारुद्रा सिनीवालि वि ते मुञ्चामि शुम्भनी इति मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति ॥ ३ ॥ अवसिञ्चति ॥ ४ ॥ तिरश्चिराजेरिति मन्त्रोक्तम् ॥ ५ ॥ आकृतिलोष्टवल्मीकौ परिलिख्य ॥ ६ ॥ पायनानि ॥ ७ ॥ अपचितामिति वैणवेन दार्भ्यूषेण कृष्णोर्णा-

१ B °मशकादिभ्यां २ B शमीशम्याकेना° ३ B °शीर्षपर्ण्या° ४ B संप्रोक्ष्य

ज्येन कालबुन्दैः स्तुकाग्रैरिति मन्त्रोक्तम् ॥८॥ चतुर्थ्याभिनिधायाभिविध्यति ॥९॥ ज्यास्तुकावज्वालेन[1] ॥१०॥ यः कीकसा इति पिशीलवीणातन्त्रीं बध्नाति ॥११॥ तन्त्र्या क्षितिकाम् ॥१२॥ वीरिणवध्रं[2] स्वयंम्लानं त्रिः समस्य ॥१३॥ अप्सु त इति वहन्त्योर्मध्ये विमिते पिञ्जूलाभिराप्लावयति ॥१४॥ अवसिञ्चति ॥१५॥ उष्णाः संपातवतीरसंपाताः ॥१६॥ नमो रूरायेति शकुनीनिवेषीकाञ्जिमण्डूकं नीललोहिताभ्यां सूत्राभ्यां सकक्षं बद्ध्वा ॥१७॥ शोर्षक्तिमित्यभिमृशति ॥१८॥ उत्तमाभ्यामादित्यमुपतिष्ठते ॥१९॥ इन्द्रस्य प्रथम इति तक्षकायेत्युक्तम् ॥२०॥ पैद्वस्य[3] प्रकर्ष्य दक्षिणेनाङ्गुष्ठेन दक्षिणस्यां नस्तः ॥२१॥ अहिभये सिच्यवगूहयति ॥२२॥ अङ्गादङ्गादित्या प्रपदात् ॥२३॥ दंश्मोत्तमयाऽभितप्याहिमभि निरस्यति[4] ॥२४॥ यतो दष्टः ॥२५॥ ओषधिवनस्पतीनामनूक्तान्यप्रतिषिद्धानि भैषज्यानाम् ॥२६॥ अंहोलिङ्गाभिः ॥२७॥ पूर्वस्य पुत्रकामावतोकयोरुदकान्ते शान्ता अधिशिरोऽवसिञ्चति ॥२८॥ आव्रजितायै पुरोडाशप्रमन्दालंकारान् संपातवतः प्रयच्छति ॥ २९ ॥ ॥ ३२ ॥

वषट् ते पूषन्निति चतुर उदपात्रे संपातानानीय, चतुरो मुञ्जान् मूर्ध्नि विवृहति प्राचः ॥ १ ॥ प्रतीचीरिषीकाः ॥ २ ॥ छिद्यमानासु संशयः ॥ ३ ॥ उष्णेनाप्लावयति दक्षिणात् केशस्तुकात् ॥ ४ ॥ शालाग्रन्थीन् विचृतति ॥ ५ ॥ उभयतःपाशं[5] योक्त्रमाबध्नाति ॥६॥ यदि सोमस्यासि राज्ञः सोमात् त्वा राज्ञोऽधिक्रीणामि। यदि वरुणस्यासि राज्ञो वरुणात् त्वा राज्ञोऽधिक्रीणामीत्येकविंशत्या यवैः स्रजं परिकिरति ॥ ७ ॥ अन्या वो अन्यामवत्वन्यान्यस्या उपावत। सध्रीचीः सव्रता भूत्वास्या अवत वीर्यमिति संनयति ॥ ८ ॥ मा ते रिषत् खनिता[6] यस्मै च त्वा खनामसि। द्विपाच्चतुष्पादस्माकं मा रिषद् देव्योषधे। स्रजो नामासि प्रजापतिष्ट्वामखनदात्मने शल्यस्रंसनम्। तां त्वा वयं खनामस्यमुष्मै त्वा शल्यस्रंसनमित्यस्तमिते छत्रेण चान्तर्धाय फालेन खनति ॥ ९ ॥ अत्र तव राध्यतामित्यग्रमवदधाति ॥ १० ॥ इह ममेति मूलमुपयच्छति ॥ ११ ॥ एकसरेऽनुपलीढे कुमारः ॥ १२ ॥ दर्भेण परिवेष्ट्य केशेषूपचृतति ॥ १३ ॥ एवं वृषाशाकवृषे[7] ॥ १४ ॥ अवपन्ने जरायुण्युपोद्धरन्ति ॥ १५ ॥

१ B ज्यास्तुकाज्वालेन  २ B °वध्रीं  ३ B पैद्वं  ४ B °मया नितप्याहिमभिनिरस्यति  ५ B उभयतः पाशं  ६ B रिषन्खनिता
७ B ह विवृहशाकवृषे

व्रजेनौषधिखननं व्याख्यातम् ॥ १६ ॥ चत्वार्युमाफलानि पाणावद्भिरभिश्चोतयते[1] ॥ १७ ॥ संवर्तमानेषु कुमारः ॥ १८ ॥ ब्राह्मणायनोऽङ्गान्यभिमृशति ॥ १९ ॥ पुंनामधेये कुमारः ॥ २० ॥ ॥ ३३ ॥

इदं जनास इत्यस्यै शिंशपाशाखासूदकान्ते शान्ता अधिशिरोऽवसिञ्चति ॥ १ ॥ आव्रजितायै ॥ २ ॥ निःसालामित्यवतोकायै कृष्णवसनायै त्रिषु विमितेषु प्राग्द्वारप्रत्यग्द्वारेष्वप्सु संपातानानयति ॥ ३ ॥ पालाशे[2] सीसेषूत्तरान् ॥ ४ ॥ सीसान्यधिष्ठाप्याप्लावयति ॥ ५ ॥ निधाय कृष्णं व्रजति ॥ ६ ॥ आदीप्य ब्रह्मा ॥ ७ ॥ एवं पूर्वयोः पृथक् संभार्ये ॥ ८ ॥ शाखासूक्तम् ॥ ९ ॥ पश्चादग्नेरभितःकाण्डे[3] इषीके निधायाध्यधि धायिने औदुम्बरीराधापयति ॥ १० ॥ उत्तमाव्रजितायै ॥ ११ ॥ पतिवेदनानि ॥ १२ ॥ आ नो अग्न इत्यागमकृशरमाशयति ॥ १३ ॥ मृगाखराद्वेद्यां मन्त्रोक्तानि संपातवन्ति द्वारे प्रयच्छति ॥ १४ ॥ उदकंसे व्रीहियवौ जाम्यै निशि हुत्वा दक्षिणेन प्रक्रामयति[4] ॥ १५ ॥ पश्चादग्नेः प्रक्षाल्य संधाव्य संपातवतीं भगस्य नावमिति मन्त्रोक्तम् ॥१६॥ सप्तदाम्न्यां संपातवत्यां वत्सान् प्रत्यन्तान् प्रचृतन्तो वहन्ति ॥ १७ ॥ अहतेन संपातवता ऋषभमभ्यस्यति ॥ १८ ॥ उदर्दयति यां दिशम् ॥ १९ ॥ जाम्यै प्र यदेत इत्यागमकृशरम् ॥ २० ॥ इमा ब्रह्मेति स्रजस्रे ॥ २१ ॥ अयमा यातीति पुरा काकसंपातात्, अर्यम्णे जुहोति ॥ २२ ॥ अन्तःस्रक्तिषु बलीन् हरति[5] ॥ २३ ॥ आपतन्ति यतः ॥ २४ ॥ ॥ ३४ ॥

पुंसवनानि ॥ १ ॥ रजउद्वासाथाः पुंनक्षत्रे ॥ २ ॥ येन वेहदिति बाणं मूर्ध्नि विवृहति बध्नाति ॥ ३ ॥ फालचमसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्च्छयित्वाध्यण्डे बृहतीपलाशविदार्यौ[6] वा प्रतिनीय पैद्वमिव ॥ ४ ॥ पर्वताद्दिव इत्यागमकृशरमाशयति ॥ ५ ॥ युगतर्म्णा संपातवन्तं द्वितीयम् ॥ ६ ॥ खे लूनांश्च पलाशत्सरून् निवृत्ते निघृष्याधाय शिश्ने आमे प्रविशति ॥७॥ शमीमश्वत्थ इति मन्त्रोक्तेऽग्निं मथित्वा पुंस्याः सर्पिषि पैद्वमिव ॥ ८ ॥ दधिमन्थे[7] पाययति ॥ ९ ॥ कृष्णोर्णाभिः परिवेष्ट्य बध्नाति ॥ १० ॥ यन्तासीति मन्त्रोक्तम्[8] ॥ ११ ॥ ऋथङ्मन्त्र इत्येका यथेयं पृथिव्यच्युतेति गर्भदंहणानि ॥ १२ ॥

---

१ B °वद्भिःश्चोतयते २ B पलाशे ३ B °रभितः काण्डे ४ B प्रक्रामति ५ B हरन्ति ६ B °विदर्यौ ७ B मधुमन्थे ८ B मन्त्रोक्तं बध्नाति

जम्भगृहीतायाः[1] प्रथमावर्जं ज्यां त्रिरुद्ग्रथ्य बध्नाति ॥ १३ ॥ लोष्टानन्वृचं प्राशयति ॥ १४ ॥ श्यामसिकताभिः शयनं परिकिरति ॥ १५ ॥ यामिच्छेद्वीरं जनयेदिति धातृव्याभिरुदरमभिमन्त्रयते[2] ॥ १६ ॥ प्रजापतिरिति प्रजाकामाया उपस्थे जुहोति ॥ १७ ॥ लोहिताजापिशितान्याशयति ॥ १८ ॥ प्रपान्तानि ॥ १९ ॥ यौ ते मातेति मन्त्रोक्तौ बध्नाति ॥ २० ॥ यथेयं भूम्या अधि यथा वृक्षं वाञ्छ[3] मे यथायं वाह इति संस्पृष्टयोर्वृक्षलिबुजयोः शकलावन्तरेषुस्थगराञ्जनकुष्ठमदुघरेष्ममथिततृणमाज्येन[4] संनीय संस्पृशति ॥२१॥ उत्तुदस्त्वेत्यङ्गुल्योपनुदति ॥२२॥ एकविंशतिं प्राचीनकण्टकानलंकृताननूक्तानादधाति ॥२३॥ कूदीप्रान्तानि ससूत्राणि ॥ २४ ॥ नवनीतान्वक्तं कुष्ठं त्रिरह्नः प्रतपति त्रिरात्रे ॥ २५ ॥ दीर्घोत्पलेऽवगृह्य संविशति ॥ २६ ॥ उष्णोदकं त्रिपादे पत्तः प्रबध्याङ्गुष्ठाभ्यामर्दयञ्छेते[5] ॥ २७॥ प्रतिकृतिमावलेखनीं दार्भ्यूषेण भाङ्गज्येन कण्टकशल्ययोलूकपत्रयासितालकाण्ड्या हृदये विध्यति ॥ २८ ॥ ॥ ३५ ॥

सहस्रशृङ्ग इति स्वापनम् ॥ १ ॥ उदपात्रेण संपातवता शालां संप्रोक्ष्यापरस्मिन् द्वारपक्षे न्युब्जति ॥ २ ॥ एवं नग्नः ॥ ३ ॥ उलूखलमुत्तरां स्रक्तिम्, दक्षिणशयनपादम्, तन्तूनभिमन्त्रयते ॥ ४ ॥ अस्थाद् द्यौरिति निवेष्टनम् ॥ ५ ॥ आवेष्टनेन वंशाग्रमवबध्य मध्यमायां बध्नाति ॥ ६ ॥ शयनपादमुत्पले च ॥ ७ ॥ आकृष्टे च ॥ ८ ॥ आकर्षेण तिलाञ्जुहोति ॥ ९ ॥ इदं यत् प्रेण्य इति शिरःकर्णमभिमन्त्रयते ॥ १० ॥ केशान् धारयति ॥ ११ ॥ भगेन मा न्यस्तिकेदं खनामीति सौवर्चलमोषधिवत्, शुक्लप्रसूनम्, शिरस्युपचृत्य ग्रामं प्रविशति ॥ १२ ॥ रथजितामिति माषस्मरान् निवपति ॥ १३ ॥ शरभृष्टीरादीप्ताः प्रतिदिशमभ्यस्यत्यर्वाच्या आवलेखन्याः ॥ १४ ॥ भगमस्या वर्च इति मालानिष्प्रमन्ददन्तधावनकेशमीशानहताया अनुस्तरण्या वा कोशमुलूखलदरणे त्रिशिले निखनति ॥ १५ ॥ मालामुपमथ्यान्वाह ॥१६॥ त्रीणि केशमण्डलानि कृष्णसूत्रेण विग्रथ्य त्रिशिलेऽश्मोत्तराणि व्यत्यासम् ॥ १७ ॥ अथास्यै भगमुत्खनति यं ते भगं निचख्नुस्त्रिशिले यं चतुःशिले । इदं तमुत्खनामि प्रजया च

१ B जम्भगृहीताय २ B धातर्व्याभि° ३ B वाञ्च ४ B °स्थकराञ्जन° ५ B प्रबद्धाङ्गुष्ठा°

धनेन चेति ॥ १८ ॥ इमां खनामीति बाणापर्णीं लोहिताजाया द्रप्सेन संनीय शयनमनु परिकिरति ॥ १९ ॥ अभि तेऽधामित्यधस्तात् पलाशमुपचृतति ॥ २० ॥ उप तेऽधामित्युपर्युपास्यति ॥ २१ ॥ कामं विनेष्यमाणोऽपाघेनासंख्याताः शर्कराः परिकिरन् व्रजति ॥ २२ ॥ संमृद्नञ्जपति ॥ २३ ॥ असंमृद्नन् ॥ २४ ॥ ईर्ष्याया ध्राजिं जनाद्विश्वजनीनात् त्वाष्ट्रेणाहमिति प्रतिजापप्रदानाभिमर्शनानि[1] ॥ २५ ॥ प्रथमेन वक्षणासु मन्त्रोक्तम् ॥ २६ ॥ अग्नेरिवेति परशुफाण्टम् ॥ २७ ॥ अव ज्यामिवेति दृष्द्वाश्मानमादत्ते ॥ २८ ॥ द्वितीयया निदधाति[2] ॥ २९ ॥ तृतीययाभिनिष्ठीवति ॥ ३० ॥ छायायां सज्यं करोति ॥ ३१ ॥ अयं दर्भ इत्योषधिवत् ॥ ३२ ॥ अग्ने जातानिति न वीरं जनयेत् प्राग्न्यानिति न विजायेतेत्यश्वतरीमूत्रमश्ममण्डलाभ्यां संघृष्य भक्तेऽलंकारे ॥ ३३ ॥ सीमन्तमन्वीक्षते ॥ ३४ ॥ अपि वृश्चेति जायायै जारमन्वाह ॥ ३५ ॥ क्लीबपदे बाधकं धनुर्वृश्चति ॥ ३६ ॥ आशयेऽश्मानं प्रहरति ॥ ३७ ॥ तृष्टिक इति बाणापर्णीम् ॥ ३८ ॥ आ ते दद इति मन्त्रोक्तानि संस्पृशति ॥ ३९ ॥ अपि चान्वाहापि चान्वाह ॥ ४० ॥ ॥ ३६ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे चतुर्थोऽध्यायः समाप्तः ॥

अम्बयो यन्तीति क्षीरौदनोत्कुचस्तम्बशाटाविज्ञानानि ॥ १ ॥ साङ्ग्रामिकं वेदिविज्ञानम् ॥ २ ॥ वेनस्तदिति पञ्चपर्वेषु कुम्भकमण्डलुस्तम्बकाम्पीलशाखायुगेध्माश्मेषु पाण्योरेकविंशत्यां शर्करास्वीक्षते ॥ ३ ॥ कुम्भमहतेन परिवेष्ट्याधाय शयने विकृते संपातानतिनयति ॥ ४ ॥ अनतीकाशमवच्छाद्यारजोविते कुमार्यौ येन हरेतां ततो नष्टम् ॥ ५ ॥ एवं सीरे साक्षे ॥ ६ ॥ लोष्टानां कुमारीमाह यमिच्छसि तमादत्स्वेति ॥ ७ ॥ आकृतिलोष्टवल्मीकौ कल्याणम् ॥ ८ ॥ चतुष्पथाद् बहुचारिणी ॥ ९ ॥ श्मशानान्न चिरं जीवति ॥ १० ॥ उदकाञ्जलिं निनयेत्याह ॥ ११ ॥ प्राचीनमपक्षिपन्त्यां कल्याणम् ॥ १२ ॥ ॥ ३७ ॥

जरायुज इति दुर्दिनमायन् प्रत्युत्तिष्ठति ॥१॥ अन्वृचमुदवज्रैः ॥२॥ अस्युल्मुककिष्कुरूनादाय ॥ ३ ॥ नग्नो ललाटमुन्मृजानः ॥ ४ ॥ उत्साद्य बाह्यतोऽङ्गारकपाले शिग्रुशर्करा जुहोति ॥ ५ ॥ केरार्कावादधाति ॥ ६ ॥ वर्षपरीतः प्रतिलोमकर्षितस्त्रिः

१ B प्रतिजापः प्रदा° २ B द्वितीययाभिनिदधाति

परिक्रम्य खदायामर्के क्षिप्रं संवपति ॥ ७ ॥ नमस्ते अस्तु यस्ते पृथुः स्तनयित्नुरित्यशनियुक्तमपादाय ॥ ८ ॥ प्रथमस्य सोमदर्भकेशानीकुष्ठलाक्षामञ्जिष्ठीबदरहरिद्रं भूर्जशकलेन परिवेष्ट्याधःशिरस्युर्वरामध्ये[1] निखनति ॥ ९ ॥ दधिनवे नाश्नात्या[2] संहरणात् ॥ १० ॥ आशापालीयं तृतीयावर्जं दृंहणानि ॥ ११ ॥ भौमानि कर्माणि[3] ॥ १२ ॥ पुरोडाशानश्मोत्तरानन्तःस्रक्तिषु निदधाति ॥ १३ ॥ उभयान् संपातवतः ॥ १४ ॥ सभाभागधानेषु च ॥ १५ ॥ असंतापे ज्योतिरायतनस्यैकतोऽन्यच्छयानो[4] भौमं जपति ॥ १६ ॥ इयं वीरुदिति मदुघं खादन्नपराजितात् परिषदमाव्रजति ॥ १७ ॥ नेच्छत्रुरिति पाटामूलं प्रतिप्राशितम् ॥ १८ ॥ अन्वाह ॥ १९ ॥ बध्नाति ॥ २० ॥ मालां सप्तपलाशीं धारयति ॥ २१ ॥ ये भक्षयन्त इति परिषद्येकभक्तमन्वीक्षमाणो भुङ्क्ते ॥ २२ ॥ ब्रह्म जज्ञानमित्यध्यायानुपाकरिष्यन्नभिव्याहारयति ॥ २३ ॥ प्राशमाख्यास्यन् ॥ २४ ॥ ब्रह्मोद्यं वदिष्यन् ॥ २५ ॥ ममाग्ने वर्च इति विभङ्क्ष्यमाणः[5] प्रमत्तरज्जुं धारयति[6] ॥ २६ ॥ सभा च मेति भक्षयति ॥ २७ ॥ स्थूणे गृह्णाति, उपतिष्ठते ॥ २८ ॥ यद्वदामीति मन्त्रोक्तम् ॥ २९ ॥ अहमस्मीत्यपराजितात् परिषदमाव्रजति ॥ ३० ॥ ॥ ३८ ॥

दूष्या दूषिरसीति स्राक्त्यं बध्नाति ॥ १ ॥ पुरस्तादग्नेः पिशङ्गं गां कारयति ॥ २ ॥ पश्चादग्नेर्लोहिताजम् ॥ ३ ॥ यूषपिशितार्थम् ॥ ४ ॥ मन्त्रोक्ताः ॥ ५ ॥ वाशाकाम्भोलसिनीवारसदंपुष्पमवधाय[7] ॥ ६ ॥ दूष्या दूषिरसि ये पुरस्तादीशानां त्वा समं ज्योतिरुतो अस्य बन्धुकृत् सुपर्णस्त्वा यां ते चक्रुरयं प्रतिसरो यां कल्पयन्तीति महाशान्तिमावपते ॥ ७ ॥ निश्यवमुच्योष्णीष्यग्रतः प्रोक्षन् व्रजति ॥ ८ ॥ यतायै यतायै शान्तायै शान्तिवायै भद्रायै भद्रावति स्योनायै शग्मायै शिवायै सुमङ्गलि प्रजावति सुसीमेऽहं वामाभूरिति ॥ ९ ॥ अभावादपविध्यति ॥ १० ॥ कृत्ययामित्रचक्षुषा समीक्षन् कृतव्यधनीत्यवलिप्तं कृत्यया विध्यति ॥ ११ ॥ उक्तावलेखनीम् ॥ १२ ॥ दूष्या दूषिरसीति दर्व्या त्रिः सारूपवत्सेनापोदकेन मथितेन गुल्फान् परिषिञ्चति ॥ १३ ॥ शकलेनावसिच्य यूषपिशितान्याशयति ॥ १४ ॥ यष्टिभिश्चर्म पिनह्य प्रेषकृत् परिक्रम्य बन्धान्मुञ्चति

---

१ B परिवेष्ट्य मन्यशिर॰ २ B दधि नवेनाश्नात्या ३ B भौमस्य दृतिकर्माणि ४ B ॰न्यं शयानो ५ B विभुङ्क्ष्यमाणः ६ B बध्नाति ७ B ॰सदंपुष्पा अवधाय

संदंशेन ॥ १५ ॥ अन्यत्पार्श्वौ संवेशयति ॥ १६ ॥ शकलेनोक्तम् ॥ १७ ॥ अभ्यक्तेति नवनीतेन मन्त्रोक्तम् ॥ १८ ॥ दर्भरज्ज्वा संनह्योत्तिष्ठैवेत्युत्थापयति ॥ १९ ॥ सव्येन दीपं दक्षिणेनोदकालाब्वादाय वाग्यताः ॥ २० ॥ प्रैषकृदग्रतः ॥ २१ ॥ अनावृतम् ॥ २२ ॥ अगोष्पदम् ॥ २३ ॥ अनुदकखातम् ॥ २४ ॥ दक्षिणाप्रवणे वा, स्वयमवदीर्णे[1] वा, स्वकृते वेरिणे, अन्यशालायां[2] वा निदधाति ॥ २५ ॥ अलाबुना दीपमवसिच्य यथा सूर्य इत्यावृत्याव्रजति ॥ २६ ॥ तिष्ठंस्तिष्ठतो[3] महाशान्तिमुच्चैरभिनिगदति ॥ २७ ॥ मर्माणि संप्रोक्षन्ते ॥ २८ ॥ कृष्णसीरेण कर्षति ॥ २९ ॥ अधि सीरेभ्यो दश दक्षिणाः[4] ॥ ३० ॥ अभिचारदेशा मन्त्रेषु विज्ञायन्ते तानि मर्माणि ॥ ३१ ॥ ॥ ३९ ॥

यददः संप्रयतीरिति येनेच्छेन्नदी प्रतिपद्येतेति प्रसिञ्चन् व्रजति ॥ १ ॥ काशदिविधुवकवेतसान् निमिनोति ॥ २ ॥ इदं व आप इति हिरण्यमधिदधाति ॥ ३ ॥ अयं वत्स इतीषीकाञ्जिमण्डूकं नीललोहिताभ्यां, सकक्षं बद्ध्वा ॥ ४ ॥ इहेत्थमित्यवकया प्रच्छादयति ॥ ५ ॥ यत्रेदमिति निनयति ॥ ६ ॥ मारुतं क्षीरौदनं मारुतशृतं मारुतैः परिस्तीर्य मारुतेन स्रुवेण मारुतेनाज्येन वरुणाय त्रिर्जुहोति ॥ ७ ॥ उक्तमुपमन्थनम् ॥ ८ ॥ दधिमन्थं बलिं हृत्वा संप्रोक्षणीभ्यां प्रसिञ्चन् व्रजति ॥ ९ ॥ पाणिना वेत्रेण वा प्रत्याहृत्योपरि निपद्यते ॥ १० ॥ अयं ते योनिरित्यरण्योरग्निं समारोपयति ॥ ११ ॥ आत्मनि वा ॥ १२ ॥ उपावरोह जातवेदः पुनर्देवो देवेभ्यो हव्यं वह प्रजानन् । आनन्दिनो मोदमानाः सुवीरा इन्धीमहि त्वा शरदां शतानीत्युपावरोहयति ॥ १३ ॥ यां त्वा गन्धर्वो अखनद्वृषणस्ते खनितारो वृषा त्वमस्योषधे । वृषासि वृष्ण्यावति वृषणे त्वां खनामसीति, उच्छुष्मापरिव्याधावायसेन खनति ॥ १४ ॥ दुग्धे फाण्टावधिज्योपस्थ आधाय पिबति ॥ १५ ॥ मयूखे मुसले वासीनः, यथासित इत्येकार्कसूत्रमार्कं बध्नाति ॥ १६ ॥ यावदङ्गीनमित्यसितस्कन्धमसितवालेन ॥ १७ ॥ आ वृषायस्वेत्युभयमप्येति ॥ १८ ॥ ॥ ४० ॥

समुत्पतन्तु प्र नभस्वेति वर्षकामो द्वादशरात्रमनुशुष्येत् ॥ १ ॥ सर्वव्रत उपश्राम्यति ॥ २ ॥ मरुतो यजते यथा

१ B स्वयंदीर्णे २ B अन्याशायां ३ B तिष्ठंस्तिष्ठन्तीं ४ B दक्षिणा

वरुणं जुहोति ॥ ३ ॥ ओषधीः संपातवतीः प्रवेश्याभिन्युब्जति ॥ ४ ॥ विप्लावयति[1] ॥ ५ ॥ श्वशिरएडकशिरःकेशजरदुपानहं[2] वंशाग्रे प्रबध्य योधयति ॥ ६ ॥ उदपात्रेण संपातवता संप्रोक्ष्यामपात्रं त्रिपादेऽश्मानमवधायाप्सु निदधाति ॥ ७ ॥ अयं ते योनिरा नो भर धीती वेत्यर्थमुत्थास्यन्नुपदधीत ॥ ८ ॥ जपति ॥ ९ ॥ पूर्वास्वषाढासु गर्तं खनति ॥ १० ॥ उत्तरासु संचिनोति ॥ ११ ॥ आदेवनं संस्तीर्य ॥ १२ ॥ उद्भिन्दतीं संजयन्तीं यथा वृक्षमशनिरिदमुग्रायेति वासितानक्षान् निवपति ॥ १३ ॥ अम्बयो यन्ति शंभुमयोभू हिरण्यवर्णा यददः पुनन्तु मा सस्रुषीर्हिमवतः प्र स्रवन्ति वायोः पूतः पवित्रेण शं च नो मयश्च नोऽनडुद्भ्यस्त्वं प्रथमं मह्यमापो वैश्वानरो रश्मिभिरित्यभिवर्षणावसेचनानि[3] ॥ १४ ॥ उत्तमेन वाचस्पतिलिङ्गाभिरुद्यन्तमुपतिष्ठते ॥ १५ ॥ स्नातोऽहतवसनो निकत्वाहतमाच्छादयति ॥ १६ ॥ ददाति ॥ १७ ॥ यथा मांसमिति वननम् ॥ १८ ॥ वत्सं संधाप्य गोमूत्रेणावसिच्य, त्रिः परिणीयोपचृतति ॥ १९ ॥ शिरःकर्णमभिमन्त्रयते ॥ २० ॥ वातरंहा इति स्नातेऽश्वे संपातानभ्यतिनयति ॥ २१ ॥ पलाशे चूर्णेषूत्तरान् ॥ २२ ॥ आचमयति ॥ २३ ॥ आप्लावयति ॥ २४ ॥ चूर्णैरवकिरति ॥ २५ ॥ त्रिरेकया चेति ॥ २६ ॥ ॥ ४१ ॥

भद्रादधीति प्रवत्स्यन्नुपदधीत ॥ १ ॥ जपति ॥ २ ॥ यानं संप्रोक्ष्य विमोचयति ॥ ३ ॥ द्रव्यं संपातवदुत्थापयति ॥ ४ ॥ निर्मृज्योपयच्छति ॥ ५ ॥ उभा जिग्यथुरित्यार्द्रपाणिपादाभ्यां[4] सांमनस्यम् ॥ ६ ॥ यानेन प्रत्यञ्चो ग्रामान् प्रतिपाद्य प्रयच्छति ॥ ७ ॥ आयातः समिध आदायोर्जं बिभ्रदित्यसंकल्पयन्नेत्य सकृदादधाति ॥ ८ ॥ ऋचं सामेत्यनुप्रवचनीयस्य जुहोति ॥ ९ ॥ युक्ताभ्यां तृतीयाम् ॥ १० ॥ आनुमतीं चतुर्थीम् ॥ ११ ॥ समावर्तनीयसमापनीययोश्चैषेज्या ॥ १२ ॥ अपो दिव्या इति पर्यवेतव्रत उदकान्ते शान्त्युदकमभिमन्त्रयते ॥ १३ ॥ अस्तमिते समित्पाणिरेत्य तृतीयावर्जं समिध आदधाति ॥ १४ ॥ इदावत्सरायेति व्रतविसर्जनमाज्यं जुहुयात् ॥ १५ ॥ समिधोऽभ्यादध्यात् ॥ १६ ॥ इदावत्सराय परिवत्सराय संवत्सराय प्रतिवेदयाम एनत्। यद्व्रतेषु दुरितं निजग्मिमो दुर्हार्दे तेन शमलेनाञ्ज्मः ॥ यन्मे व्रतं व्रतपते लुलोभाहोरात्रे समधातां म एनत्।

१ B विप्लावयेत २ B श्वशिरएटकशिरःकेशजरदुपानहो ३ B °सेचनानाम् ४ B °त्यार्द्रपादाभ्यां

उद्यन् पुरस्ताद्भिषगस्तु चन्द्रमाः सूर्यो रश्मिभिरभिगृणात्वेनत् ॥ यद्व्रतमतिपेदे चित्त्या मनसा हृदा । आदित्या रुद्रास्तन्मयि वसवश्च समिन्धताम् ॥ व्रतानि व्रतपतय उपाकरोम्यग्नये । स मे द्युम्नं बृहद्यशो दीर्घमायुः कृणोतु म इति व्रतसमापनीरादधाति ॥ १७ ॥ त्रिरात्रमरसाशी स्नातव्रतं चरति ॥ १८ ॥ निर्लक्ष्म्यमिति पापलक्षणाया मुखमुक्षत्यन्वृचं दक्षिणात् केशस्तुकात् ॥ १९ ॥ पलाशेन फलीकरणान् हुत्वा शेषं प्रत्यानयति ॥ २० ॥ फलीकरणतुषबुसावतक्षणानि, सव्यायां पादपाष्ण्यां निदधाति ॥ २१ ॥ अपनोदनापाघाभ्यामन्वीक्ष्यान्[1] प्रतिजपति ॥ २२ ॥ दीर्घायुत्वायेति मन्त्रोक्तं बध्नाति ॥ २३ ॥ ॥ ४२ ॥

कर्शफस्येति पिशङ्गसूत्रमरलुदण्डं यदायुधम् ॥ १ ॥ फलीकरणैर्धूपयति ॥ २ ॥ अति धन्वानीत्यवसाननिवेशनानुचरण-निनयनेज्याः[2] ॥ ३ ॥ वास्तोष्पतीयैः कुलिजकृष्टे दक्षिणतोऽग्नेः संभारमाहरति ॥ ४ ॥ वास्तोष्पत्यादीनि महाशान्तिमावपते ॥५॥ मध्यमे गर्ते दर्भेषु व्रीहियवमावपति ॥ ६ ॥ शान्त्युदकशष्पशर्करमन्येषु ॥ ७ ॥ इहैव ध्रुवामिति मीयमानामुच्छ्रीयमाणामनु-मन्त्रयते ॥ ८ ॥ अभ्यज्य ऋतेनेति मन्त्रोक्तम् ॥ ९ ॥ पूर्णं नारीत्युदकुम्भमग्निमादाय प्रपद्यन्ते ॥१०॥ ध्रुवाभ्यां दंहयति ॥ ११ ॥ शंभुमयोभुभ्यां विष्यन्दयति ॥ १२ ॥ वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशो अनमीवो न एधि । यत्त्वेमहे प्रति नस्तज्जुषस्व चतुष्पदो द्विपद आवेशयेह ॥ अनमीवो वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि न इति वास्तोष्पतये क्षीरौदनस्य जुहोति ॥ १३ ॥ सर्वान्नानि ब्राह्मणान् भोजयति ॥ १४ ॥ मङ्गल्यानि ॥ १५ ॥ ये अग्नय इति क्रव्यादुपहत[3] इति पालाशं बध्नाति ॥ १६ ॥ जुहोति ॥ १७ ॥ आदधाति ॥ १८ ॥ उदञ्चनेनोदपात्र्यां यवानद्भिरानीयोल्लोपम् ॥ १९ ॥ ये अग्नय इति पालाश्या दर्व्या मन्थमुपमथ्य काम्पीलीभ्यामुपमन्थनीभ्याम् ॥ २० ॥ शमनं च ॥ २१ ॥ ॥ ४३ ॥

य आत्मदा इति वशाशमनम् ॥ १ ॥ पुरस्तादग्नेः प्रतीचीं धारयन्ति ॥ २ ॥ पश्चादग्नेः प्राङ्मुख उपविश्यान्वारब्धायै शान्त्युदकं करोति ॥ ३ ॥ तत्रैतत् सूक्तमनुयोजयति ॥ ४ ॥ तेनैनामाचामयति च संप्रोक्षति च ॥ ५ ॥ तिष्ठंस्तिष्ठन्तीं महाशान्ति-मुच्चैरभिनिगदति ॥ ६ ॥ य ईशे पशुपतिः पशूनामिति हुत्वा वशामनक्ति शिरसि ककुदे जघनदेशे ॥ ७ ॥ अन्यतरां स्वधिति-

१ B °मन्वीक्षं   २ B °नुचरणानि निनयनेज्या   ३ B क्रव्यादनुपहत

धारामनक्ति ॥ ८ ॥ अक्तया वपामुत्खनति ॥ ९ ॥ दक्षिणे पार्श्वे दर्भाभ्यामधिक्षिपत्यमुष्मै त्वा जुष्टमिति यथादेवतम् ॥ १० ॥ निःसालामित्युल्मुकेन त्रिः प्रसव्यं परिहरत्यनभिपरिहरन्नात्मानम् ॥ ११ ॥ दर्भाभ्यामन्वारभते ॥ १२ ॥ पश्चादुत्तरतोऽग्नेः प्रत्यक्शीर्षीमुदक्पादीं निविध्यति ॥ १३ ॥ समस्यै तन्वा भवेत्यन्यतरं दर्भमवास्यति ॥ १४ ॥ अथ प्राणानास्थापयति प्रजानन्त इति ॥ १५ ॥ दक्षिणतास्तिष्ठन् रक्षोहणं जपति ॥१६॥ संज्ञप्तायां जुहोति यद्वशा मायुमक्रतोरो वा पद्भिराहत। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस इति ॥ १७ ॥ उदपात्रेण पत्न्यभिव्रज्य मुखादीनि गात्राणि प्रक्षालयति[1] ॥ १८ ॥ मुखं शुन्धस्व देवयज्यायां इति ॥ १९ ॥ प्राणानिति नासिके ॥ २०॥ चक्षुरिति चक्षुषी ॥ २१ ॥ श्रोत्रमिति कर्णौ ॥ २२ ॥ यत्ते क्रूरं यदास्थितमिति समन्तं रज्जुधानम् ॥ २३ ॥ चरित्राणीति पादान् समाहृत्य ॥ २४ ॥ नाभिमिति नाभिम् ॥ २५ ॥ मेढ्रमिति मेढ्रम् ॥ २६ ॥ पायुमिति पायुम् ॥ २७ ॥ यत्ते क्रूरं यदास्थितं तच्छुन्धस्वेत्यवशिष्टाः पार्श्वदेशेऽवसिच्य यथार्थं व्रजति ॥ २८ ॥ वपाश्रपण्यावाज्यं स्रुवं स्वधितिं दर्भमादायाभिव्रज्योत्तानां परिवर्त्यानुलोमं नाभिदेशे दर्भमास्तृणाति ॥२९॥ ओषधे त्रायस्वैनमिति, स्वधिते[2] मैनं हिंसीरिति शस्त्रं प्रयच्छति ॥ ३० ॥ इदमहमामुष्यायणस्यामुष्याः पुत्रस्य प्राणापानावपक्रन्तामीत्यपकृत्य ॥ ३१ ॥ अधरप्रव्रस्केन लोहितस्यापहत्य ॥ ३२ ॥ इदमहमामुष्यायणस्यामुष्याः पुत्रस्य प्राणापानौ निखनामीत्यास्ये निखनति ॥ ३३ ॥ वपया द्यावापृथिवी प्रोर्णुवाथामिति वपाश्रपण्यौ वपया प्रच्छाद्य ॥ ३४ ॥ स्वधितिना प्रकृत्योत्कृत्य ॥ ३५ ॥ आव्रस्कमभिघार्य ॥ ३६ ॥ वायवे स्तोकानामिति दर्भाग्रं प्रास्यति ॥ ३७ ॥ प्रत्युष्टं रक्ष इति चरमाङ्गारे[3] निदधाति ॥ ३८ ॥ देवस्त्वा सविता श्रपयत्विति श्रपयति ॥ ३९ ॥ सुशृतां करोति ॥ ४० ॥ ॥ ४४ ॥

यद्यष्टापदी स्याद्गर्भमञ्जलौ सहिरण्यं सयवं वा य आत्मदा इति खदायां त्र्यरत्नावग्नौ सकृज्जुहोति ॥ १ ॥ विशस्य समवत्तान्यवद्येत् ॥ २ ॥ हृदयं जिह्वा श्येनश्च दोषी पार्श्वे च तानि षट् । यकृद्वृक्कौ गुदश्रोणी तान्येकादश दैवतानि ॥ ३ ॥ दक्षिणः कपिलललाटः सव्या श्रोणिर्गुदश्च यः । एतानि त्रीणि त्र्यङ्गानि स्विष्टकृद्भाग एव सः[4] ॥ ४ ॥ तदवद्य प्रज्ञातानि

१ B प्रक्षालयते २ B त्रायस्वैनं स्वधिते ३ B चरुमङ्गारे ४ Wanting in B

श्रपयेत् ॥ ५ ॥ होष्यन् द्विर्द्विर्दैवतानामवद्येत् ॥ ६ ॥ सकृत् सकृत् सौविष्टकृतानाम् ॥ ७ ॥ वपायाः समिद्ध ऊर्ध्वो अस्येति जुहोति ॥ ८ ॥ युक्ताभ्यां तृतीयाम् ॥ ९ ॥ आनुमतीं चतुर्थीम् ॥ १० ॥ जातवेदो वपया गच्छ देवांस्त्वं हि होता प्रथमो बभूथ । घृतस्याग्ने तन्वा संभव सत्याः सन्तु यजमानस्य कामाः स्वाहा ॥ ११ ॥ ऊर्ध्वनभसं[1] मारुतं गच्छतमिति वपाश्रपण्यावनुप्रहरति ॥ १२ ॥ प्राचीमेकशृङ्गां प्रतीचीं द्विशृङ्गाम् ॥ १३ ॥ पित्र्येषु वह वपां जातवेदः पितृभ्यो यत्रैतान् वेत्थ निहितान् पराके । मेदसः कुल्या उप तान् स्रवन्तु सत्या एषामाशिषः सन्तु कामाः स्वाहा स्वधेति वपायास्त्रिर्जुहोति ॥ १४ ॥ समवत्तानाम् ॥ १५ ॥ स्थालीपाकस्य सम्राडस्यधिश्रयणं नाम सखीनामभ्यहं विश्वा आशाः साक्षीय । कामोऽसि कामाय त्वा सर्ववीराय सर्वपुरुषाय सर्वगणाय सर्वकामाय जुहोमि । अन्वद्य नोऽनुमतिः पूषा सरस्वती मही । यत् करोमि तदृध्यतामनुमतये स्वाहेति जुहोति ॥ १६ ॥ क इदं कस्मा अदात् कामस्तदग्रे यद्दत्तं पुनर्मैत्विन्द्रियमिति प्रतिगृह्णाति ॥ १७ ॥ उत्तमा सर्वकर्मा ॥ १८ ॥ वशया पाकयज्ञा व्याख्याताः ॥ १९ ॥ ॥ ४५ ॥

उतामृतासुः शिवास्त इत्यभ्याख्याताय प्रयच्छति ॥ १ ॥ द्रुघण शिरो रज्ज्वा बध्नाति ॥ २ ॥ प्रतिरूपं पलाशायोलोहहिरण्यानाम् ॥ ३ ॥ येन सोमेति याजयिष्यन् सारूपवत्समश्नाति ॥ ४ ॥ निधने यजते ॥ ५ ॥ यं याचामि यदाशसेति याचिष्यन् ॥ ६ ॥ मन्त्रोक्तनिपतितेभ्यो[2] देवाः कपोत ऋचा कपोतममून् हेतिरिति महाशान्तिमावपते ॥ ७ ॥ परीमेऽग्निमित्यग्निं गामादाय निशि कारयमाणस्त्रिः शालां परिणयति ॥ ८ ॥ परोऽपेहि यो न जीव इति स्वप्नं दृष्ट्वा मुखं विमार्ष्टि ॥ ९ ॥ अतिघोरं दृष्ट्वा मैश्रधान्यं पुरोडाशमन्याशायां वा निदधाति ॥ १० ॥ पर्यावर्त इति पर्यावर्तते ॥ ११ ॥ यत् स्वप्न इत्यशित्वा वीक्षते ॥ १२ ॥ विद्म ते स्वप्नेति सर्वेषामप्ययः ॥ १३ ॥ नहि ते अग्ने तन्व इति ब्रह्मचार्याचार्यस्यादहन उपसमाधाय त्रिष्परिक्रम्य[3] पुरोडाशं जुहोति ॥ १४ ॥ त्रिरात्रमपर्यावर्तमानः शयीत ॥ १५ ॥ नोपशयीतेति कौशिकः ॥ १६ ॥ स्नानीयाभिः स्नायात् ॥ १७ ॥ अपर्यवेतव्रतः प्रत्युपेयात् ॥ १८ ॥ अवकीर्णिने दर्भशुल्बमासज्य यत्ते देवीत्यावपति ॥ १९ ॥ एवं संपातवतोदपात्रेणावसिच्य ॥ २० ॥ मन्त्रोक्तं शान्त्युदकेनोपसिच्य[4] ॥ २१ ॥ सं समिदिति स्वयंप्रज्वलितेऽग्नौ ॥ २२ ॥ अग्नी रक्षांसि सेधतीति सेधन्तम्

१ B ऊर्ध्वं नभसं २ B मन्त्रोक्तानि पतितेभ्यो ३ B त्रिः परिक्रम्य ४ B °केन संप्रोक्ष्य

॥ २३ ॥ यदस्मृतीति संदेशमपर्याप्य ॥ २४ ॥ प्रत्नो हीति पापनक्षत्रे जाताय, मूलेन ॥ २५ ॥ मा ज्येष्ठं त्रिते देवा इति परिविक्तिपरिविविदानावुदकान्ते मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति ॥ २६ ॥ अवसिञ्चति ॥ २७ ॥ फेनेषूत्तरान् पाशानाधाय नदीनां फेनानित्याप्लावयति[1] ॥ २८ ॥ सर्वैश्च प्रविश्यापां सूक्तैः ॥ २९ ॥ देवहेडनेन मन्त्रोक्तम् ॥ ३० ॥ आचार्याय च[2] ॥ ३१ ॥ उपदधीत ॥ ३२ ॥ खदाशयस्यावपते ॥ ३३ ॥ वैवस्वतं यजते ॥ ३४ ॥ चतुःशरावं ददाति ॥ ३५ ॥ उत्तमर्णे मृते तदपत्याय प्रयच्छति ॥ ३६ ॥ सगोत्राय ॥ ३७ ॥ श्मशाने निवपति ॥ ३८ ॥ चतुष्पथे च ॥ ३९ ॥ कक्षानादीपर्यति ॥ ४० ॥ दिवो नु मामिति वीध्रबिन्दून् प्रक्षालयति ॥ ४१ ॥ मन्त्रोक्तैः स्पृशति ॥ ४२ ॥ यस्योत्तमदन्तौ पूर्वौ जायेते यौ व्याघ्रावित्यावपति ॥ ४३ ॥ मन्त्रोक्तान् दंशयति ॥ ४४ ॥ शान्त्युदकशृतमादिष्टानामाशयति ॥ ४५ ॥ पितरौ च ॥ ४६ ॥ इदं यत् कृष्ण इति कृष्णशकुनिनाधिक्षिप्तं प्रक्षालयति ॥ ४७ ॥ अपमृष्टं[3] पर्यग्नि करोति ॥ ४८ ॥ प्रतीचीनफल इत्यपामार्गेध्मेऽपामार्गीरादधाति ॥ ४९ ॥ यदर्वाचीनमित्याचामति ॥ ५० ॥ यत्ते भूम इति विखनति ॥ ५१ ॥ यत्त ऊनमिति संवपति ॥ ५२ ॥ प्रेहि प्र हरेति कापिञ्जलानि स्वस्त्ययनानि भवन्ति ॥ ५३ ॥ प्रेहि प्र हर वा दावान् गृहेभ्यः स्वस्तये । कपिञ्जल प्रदक्षिणं शतपत्राभि नो वद । भद्रं वद दक्षिणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात् कपिञ्जल ॥ शुनं वद दक्षिणतः शुनमुत्तरतो वद । शुनं पुरस्तान्नो वद शुनं पश्चात् कपिञ्जल ॥ भद्रं वद पुत्रैर्भद्रं वद गृहेषु च । भद्रमस्माकं वद भद्रं नो अभयं वद ॥ आवदंस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन् वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥ यौवनानि महयसि जिग्युषामिव दुन्दुभिः । कपिञ्जल प्रदक्षिणं शतपत्राभि नो वदेति कापिञ्जलानि स्वस्त्ययनानि भवन्ति ॥ ५४ ॥ यो अभ्यु बभ्रुणायसि स्वपन्तमत्सि पुरुषं शयानमगत्स्वलम् । अयस्मयेन ब्रह्मणाश्ममयेन वर्मणा पर्यस्मान् वरुणो दधदित्यभ्यवकाशे संविशत्यभ्यवकाशे संविशति ॥ ५५ ॥ ॥ ४६ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे पञ्चमोऽध्यायः समाप्तः ॥

१ B फेनानिति प्रप्लावयति २ Wanting in B ३ B उपमृष्टं

उभयतःपरिछिन्नं[1] शरमयं बर्हिराभिचारिकेषु ॥ १ ॥ दक्षिणतः संभारमाहरत्याङ्गिरसम् ॥ २ ॥ इङ्गिडमाज्यम् ॥ ३ ॥ सव्यानि ॥ ४ ॥ दक्षिणापवर्गाणि ॥ ५ ॥ दक्षिणाप्रवण इरिणे[2] दक्षिणामुखः प्रयुङ्क्ते ॥ ६ ॥ साग्नीनि ॥ ७ ॥ अग्ने यत्ते तप इति पुरस्ताद्धोमाः ॥ ८ ॥ तथा तदग्ने कृणु जातवेद इत्याज्यभागौ ॥ ९ ॥ निरमुं नुद इति संस्थितहोमाः ॥ १० ॥ कृत्तिकारो-कारोधावाग्येषु ॥ ११ ॥ भरद्वाजप्रव्रस्केनाङ्गिरसं दण्डं वृश्चति ॥ १२ ॥ मृत्योरहमिति बाधकीमादधाति ॥ १३ ॥ य इमामयं वज्र इति द्विगुणामेकवीरां संनह्य[3] पाशान् निमुष्टितृतीयं दण्डं संपातवत् ॥ १४ ॥ पूर्वाभिर्बध्नीते ॥ १५ ॥ वज्रोऽसि सपत्नहा त्वयाद्य वृत्रं साक्षीय। त्वामद्य वनस्पते वृक्षाणामुदयुष्महि ॥ स न इन्द्र पुरोहितो विश्वतः पाहि रक्षसः। अभि गावो अनूषताभि द्युम्नं बृहस्पते ॥ प्राण प्राणं त्रयस्वासो असवे मृड। निर्ऋते निर्ऋत्या नः पाशेभ्यो मुञ्च इति, दण्डमादत्ते ॥ १६ ॥ भक्तस्याहुतेन मेखलाग्रन्थिमालिम्पति[4] ॥ १७ ॥ अयं वज्र इति बाह्यतो दण्डमूर्ध्वमवागग्रं तिसृभिरन्वृचं निहन्ति ॥ १८ ॥ अन्तरुपस्पृशेत् ॥ १९ ॥ यदश्नामीति मन्त्रोक्तम् ॥ २० ॥ यत् पात्रमाहन्ति फड्ढतोऽसाविति ॥ २१ ॥ इदमहमामुष्यायणस्यामुष्याः पुत्रस्य प्राणापाना-वप्यायच्छामीत्यायच्छति ॥ २२ ॥ येऽमावास्यामिति संनह्य सीसचूर्णानि भक्तेऽलंकारे ॥ २३ ॥ पराभूतवेणोर्यष्ट्या बाहुमात्रा-लंकृतयाऽऽहन्ति ॥ २४ ॥ द्यावापृथिवी उर्विंति परशुपलाशेन दक्षिणा धावतः पदं वृश्चति ॥ २५ ॥ अन्वक् त्रिः, तिर्यक् त्रिः ॥ २६ ॥ अक्ष्णया संस्थाप्य ॥ २७ ॥ आव्रस्कात् पांशून्[5] पलाश उपनह्य[6] भ्राष्ट्रे[7]ऽभ्यस्यति ॥ २८ ॥ स्फोटत्सु स्तृतः ॥ २९ ॥ पश्चादग्नेः कर्ष्वां कूद्युपस्तीर्णायां द्वादशरात्रमपर्यावर्तमानः शयीत ॥ ३० ॥ तत उत्थाय त्रिरह्न उदवज्रान् प्रहरति ॥ ३१ ॥ नद्या अनामसंपन्नाया अश्मानं प्रास्यति ॥ ३२ ॥ उष्णेऽक्षतसक्तूननूपमथिताननुच्छ्वसन् पिबति ॥ ३३ ॥ कथं त्रींस्त्रीन् कार्शींस्त्रिरात्रम् ॥ ३४ ॥ द्वौ द्वौ त्रिरात्रम् ॥ ३५ ॥ एकैकं षड्रात्रम् ॥ ३६ ॥ द्वादश्याः प्रातः क्षीरौदनं भोजयित्वोच्छिष्टानुच्छिष्टं बहुमत्स्ये प्रकिरति ॥ ३७ ॥ संधावत्सु स्तृतः ॥ ३८ ॥ लोहितशिरसं कृकलासममून् हन्मीति हत्वा सद्यःकार्यौ भाङ्गे शयने ॥ ३९ ॥ लोहितालंकृतं कृष्णवसनम्, अनूक्तं दहति ॥ ४० ॥ एकपदाभिरन्योऽनुतिष्ठति ॥ ४१ ॥ अङ्गशः सर्वहुतमन्यम् ॥ ४२ ॥ पश्चादग्नेः शरभृष्टीर्निधायोदग्व्रजत्या स्वेदजननात् ॥ ४३ ॥ निवृत्य स्वेदालंकृता जुहोति ॥ ४४ ॥ कोश उरःशिरोऽवधाय, पदात् पांसून् ॥ ४५ ॥ पश्चादग्नेः, लवणमृडी-चीस्तिस्रोऽशीतीर्विकर्णीः शर्कराणाम् ॥ ४६ ॥ विषं शिरसि ॥ ४७ ॥ बाधकेनावागग्रेण प्रणयन्नन्वाह ॥ ४८ ॥ पाशे स इति

१ B उभयतः परिच्छन्नं २ B ईरिणे ३ B °वीरान्संनह्य ४ B मेखलाया ग्रन्थि° ५ B आव्रस्कात्पांशून् ६ B पलाशमुपनह्य ७ B भ्राष्ट्रे

कोशे ग्रन्थीनुद्ग्रथ्नाति ॥ ४९ ॥ आमुमिस्यादत्ते ॥ ५० ॥ मर्माणि[1] खादिरेण स्रुवेण गर्तं खनति ॥ ५१ ॥ बाहुमात्रम्, अतीव य इति शरैरवज्वालयति ॥ ५२ ॥ अवधाय, संचित्य लोष्टम्, स्रुवेण समोप्य ॥५३॥ अमुमुन्नैषमिति, उक्तावलेखनीम् ॥ ५४॥ छायां वा ॥ ५५ ॥ उपनिनयते ॥ ५६ ॥ अन्वाह ॥ ५७ ॥ ॥ ४७ ॥

भ्रातृव्यक्षयणमित्यरण्ये सपत्नक्षयणीरादधाति ॥ १ ॥ ग्राममेत्यावपति ॥ २ ॥ पुमान् पुंस इति मन्त्रोक्तमभिहुतालंकृतं बध्नाति ॥३॥ यावन्तः सपत्नास्तावतः पाशानिङ्गिडालंकृतान् संपातवतोऽनूक्तान् ससूत्रांश्चम्वां मर्माणि[2] निखनति ॥४॥ नावि प्रणान्नुदस्व कामेति मन्त्रोक्तं शाखया प्रणुदति ॥ ५ ॥ तेऽधराञ्च इति प्रप्लावयति ॥ ६ ॥ बृहन्नेषामित्यायन्तं शप्यमानमन्वाह ॥ ७ ॥ वैकङ्कतेनेति, मन्त्रोक्तम् ॥८॥ ददिर्हीति साग्नीनि ॥ ९ ॥ देशकपदु प्रक्षिणाति ॥१०॥ तेऽवदन्निति नेतॄणां पदं वृश्चति ॥ ११ ॥ अन्वाह ॥ १२ ॥ ब्रह्मगवीभ्यामन्वाह ॥ १३ ॥ चेष्टाम् ॥ १४ ॥ विचृतति ॥ १५ ॥ ऊवध्ये ॥ १६ ॥ श्मशाने ॥ १७ ॥ त्रिरमून् हनस्वेत्याह ॥ १८ ॥ द्वितीययाश्मानमूवध्ये गूहयति ॥ १९ ॥ द्वादशरात्रं सर्वव्रत उपश्राम्यति ॥ २० ॥ द्विरुदिते स्तृतः ॥ २१ ॥ अवागग्रेण निवर्तयति ॥ २२ ॥ उप प्रागादिति शुने पिण्डं पाण्डुं प्रयच्छति ॥ २३ ॥ ताच्छें बध्नाति ॥ २४ ॥ जुहोति ॥ २५ ॥ आदधाति ॥ २६ ॥ इदं तद्युजे यत्किं चासौ मनसेत्याहिताग्निं प्रति निर्वपति[3] ॥ २७ ॥ मध्यमपलाशेन फलीकरणाञ्जुहोति ॥ २८ ॥ निरमुमित्यङ्गुष्ठेन त्रिरनुप्रस्तृणाति ॥ २९ ॥ शरं कध्विण्डकोष्ठैरनुनिर्वर्तयति[4] ॥ ३० ॥ लोहिताश्वत्थपलाशेन विषावध्वस्तं जुहोति ॥ ३१ ॥ त्वं विरुधामिति मूत्रपुरीषं वत्सशेप्यायां कक्रचैरपिधाप्य[5] बाधकेन[6] संपिष्य निखनति ॥ ३२ ॥ शेप्यानडे ॥ ३३ ॥ शेप्यायाम् ॥ ३४ ॥ यथा सूर्य इत्यन्वाह ॥ ३५ ॥ उत्तरया आयांस्तान्[7] पश्यति ॥ ३६ ॥ इन्द्रोतिभिरग्ने जातान् यो नः स्तायद्दिप्सति यो नः शपादिति वैस्रुद्धतीः ॥ ३७ ॥ सांतपना इत्यूर्ध्वंशुषीः ॥ ३८ ॥ भ्रंसश्टृतं पुरोडाशं भ्रंसविलीनेन सर्वहुतम् ॥ ३९ ॥ उदस्य श्वावावितीषीकाञ्जिमण्डूकं नीललोहिताभ्यां सूत्राभ्यां सकक्षं बद्ध्वोष्णोदके व्यादाय प्रत्याहुति मण्डूकमपनुदत्यभिन्युब्जति ॥ ४० ॥ उपधावन्तमसदन् गाव इति काम्पीलं संनह्य क्षीरोत्सिक्ते पाययति लोहितानां चैकशम् ॥ ४१ ॥ अशिशिषोः क्षीरौदनम् ॥ ४२ ॥ आमपात्रमभ्यवनेनेक्ति ॥ ४३ ॥ ॥ ४८ ॥

---

१ B मर्मणि २ B °श्चम्वा मर्मणि ३ B प्रतिनिर्वपति ४ B कद्विन्दुकोष्ठैरनुनिर्वपति ५ B ककुचै° ६ wanting in B ७ B यांस्तान्

॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ मैवेद्दितपुंसा ॥ ॥ अथर्ववेदभाष्यं लिख्यते ॥ अथ विधिं
वक्ष्यामः ॥ अत्र हेतुर्न चह्द लक्षणमयाभ्रमविप्रकाशनं ॥ क्रियावशेषो धायकुरारियं दृतातस्याम
नत्वाधिसमीभयन्तूंते ॥ परार्थपूर्वकोयदुक्तं नैमित्तिकानां विधिः ॥ तस्मात्सद्विवादगोत्रस्थ
मंत्रानिरच्यंते ॥ पुत्रविधिं वक्ष्यामः ॥ रोमनः श्राद्धरूपाणि तदर्थं स्रापि -- वस्यतुभ्यंश्राद्धतुभ्यं
श्राद्धंचात्रभ्रान्तिविचार्यते ॥ त्रिपदसूत्रं न बुधिपदमेव वक्ते व्यंभिषत्वादिसूत्रवत् ॥ आरव्या
नस्यसामर्थ्यलभ्यत्वात् ॥ त्रिप्रकारा हि कल्प्यकारारीति सूचनार्थः ॥ मंत्राधिकारेण फलाधि
कारेण च संस्कारक्रतिर्नेराण्यां ॥ इति त्रिधा वा सूत्रकृतः शौनाकुरुणा युक्तात्वत्रविचार्यमत
त्रमंत्राधिकारेण विधिमाह किं फलाधिकारेण पेडीनस्यस्वरूपसंस्कारक्रमेण मन्त्रादीनां गोत्रिप
स्यंवैति अत्राधिकारेणात्रोषविधिवचनमस्य न्याय्यं ग्रंथगौरवात् ॥ माहृतिधिग्रंथस्थवस्तुरूपसं
स्कारक्रमेणापि नैमित्तिकाधानाम प्रसंगः ॥ ममापि वस्तुत च वफलवचनं पुनः पुनः क्रियते ॥ फला
धिकारेण तु विभूतपूर्व दोषप्रसंगः ॥ लाघवगुणेष्टानामनः गुणाफले साजात्येन मंत्रग्रहणे भि
ह्मार्विधिराश्रितः ॥ कौशिकेन अथवा त्रिविधा संहिता आचार्यसंहिता आर्षीसंहिता विधिप्र
योगसंहिता केन उप. नीयशिष्यं पाठयति ॥ स आचार्यसंहिता ॥ पितरंमित्रश्रातृष्यं ॥ ऋषि
गाद्दष्टाक्रषिसंहितायाविद्यात्रारभ्य पितरमित्रंश्रानृष्यं ॥ नेनानेतन्वे ॥ श्रांकरं द्रष्टिव्यांनेनि
षेचनं वा हि ष्टअस्तु बालिनी त्यवमार्षी ॥ आर्षी पार्षदे पूर्वमेकद्दितमासूचिता विधिप्रयोगसंहि
ता विधौ प्रयुज्यते ॥ ऋतुभ्यस्त्वायजे स्वाहेति केनत्री ष्यामाशीः ॥ ज्येष्टनेसर्वप्रजामरिष्यतीत्ये
नमाहतिनंवा अहंनार्वावंचनपरांचन्नप्रत्यंचांदहस्मीतनाशीष्यांतेनैनंभ्रात्रिषंतेनेनमजो
गमंडनरयोगप्रयोगः ॥ अग्निंब्रूमोयन्मानलोरथं क्रीनं ब्रूमोराजानंयन्मानलोत्येवंस

श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। ओमेव हितः पुंसाम्। अथ विधिभाष्यं लिख्यते॥ अथ विधिं वक्ष्यामः ॥१॥ अत्र हेतुर्न शब्दलक्षणतया स्वमतिप्रकाशनम्। क्रियाविशेषबोधाय गुरोरियं कृतिः। तस्या मानत्वाद्धि समभिह्रियते। पदार्थपूर्वको यदुक्तं नैमित्तिकानां विधिः। तस्मात् पदविभागोऽत्र प्रथमं प्रतिरच्यते। सूत्रविधिं वक्ष्यामः। 'लोकतः शब्दरूपाणि तदर्थांश्चापि योजयेत्। सूत्रतुल्यं शब्दतुल्यं शब्दश्चात्र (पश्चान्न) विचार्यते'। त्रिपदसूत्रे न वचिपदमेव वक्तव्यं भिषक्त्वादिसूत्रवत्[1]। आख्यातस्य सामर्थ्यलभ्यत्वात्। त्रिप्रकारा हि कल्पकारा इति सूचनार्थः। मन्त्राधिकारेण फलाधिकारेण च संस्कारकृतेर्नराणामिति त्रिधा वा सूत्रकृतिः कृता गुरुणा। युक्ता त्वत्र विचार्यते। तत्र मन्त्राधिकारेण विधिमाह किं वा फलाधिकारेण पैठीनसस्य स्वरूपसंस्कारक्रमेण मन्वादीनां गोत्रिकस्य वेति। मन्त्राधिकारेणाशेषविधिवचनमस्य न्याय्यं ग्रन्थगौरवान्नाह। विधिग्रन्थस्येव पुरुषसंस्कारक्रमेणापि नैमित्तिकविधीनामप्रसङ्गः। मन्त्रा अपि च स्युः। तत्र च फलवचनं पुनः पुनः क्रियते। फलाधिकारेण तु विधाने पूर्वदोषप्रसङ्गः। लाघवं गुणेष्विष्टो नाम। अतः गुणफलसाजात्येन मन्त्रग्रहणे शिक्षाविधिराश्रितः कौशिकेन। अथवा त्रिविधा संहिता। आचार्यसंहिता आर्षी संहिता विधिप्रयोगसंहिता। येन उपनीय शिष्यं पाठयति सा आचार्यसंहिता। 'पितरं पर्जन्यं शतवृष्ण्यम्'[2]। ऋषिणा दृष्टा आर्षी संहिता। यथा 'विद्मा शरस्य पितरं मित्रं शतवृष्ण्यम्। तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति'[3] इत्येवमार्षी। 'आर्षी पार्षदे पूर्वप्रोक्ता'[4] इति सा सूचिता। विधिप्रयोगसंहिता विधौ प्रयुज्यते। 'ऋतुभ्यष्ट्वा यजे स्वाहा'[5] इति। 'केन शीर्ष्णा प्राशीः। ज्येष्ठतस्ते प्रजा मरिष्यतीत्येनमाह'। अन्ते 'तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्। बृहस्पतिना शीर्ष्णा तेनैनं प्राशिषं तेनैनमजीगमम्'[6] उत्तरयोगप्रयोगः। 'अग्निं ब्रूमो'[7] 'यन्मातली रथक्रीतं'[8] 'ब्रूमो राजानं'[9] 'यन्मातली' इत्येवं स-

र्वासां द्वितीया । षट्चत्वारिंशदृचो विधिसंहिता । 'आयमगन्'[1] 'ऋतून् यजे'[2] 'इन्द्रपुत्रे'[3] 'एकाष्टका'[4] इति विधि-
प्रयोगसंहिता 'इन्द्रस्यौज'[5] इत्यनयावपन्नं प्रक्षालयति । जिष्णवे योगाय'[5] इत्यपो युनक्ति'[6] । पुनः 'इ-
न्द्रस्यौज इति प्रक्षालयति । जिष्णवे योगाय इत्यपो युनक्ति' । एतद् न्यासेन न्यासेन प्रक्षालनयोगैः एता-
श्चैकावसाना युक्ता वक्तुमिति विधिप्रयोगसंहिताप्रदर्शनम् । अथवा प्रयोगधर्मवादिन इति
५ सूचनाय । ईश्वरवासुदेवबुद्धऋषभादयः । तथा चोदनैकप्रमाणवादिनो व्यासमनुजैमिन्यादयः । त-
था लोकायतिका येऽधर्माधिगमप्रमाणवादिनोऽन्यान् लुञ्चन्ति । आह च – 'स्वतो न जानन्ति शिवं म-
नुष्या न तत् कृतं वाच्यमिहास्ति किञ्चित् । अतो न धर्मोऽस्ति हतैः प्रमाणैः स्वरेदविद्वान् विषयातिशङ्कितः' ।
तत्राद्योत्यमानः प्रतिषेधः क्रमोक्तः 'स पुनराम्नायप्रत्ययः'[7] इति । अथवा त्रिविधः पुरुषार्थः । सुखो-
पभोगः स्वर्गो दुःखोपभोगो नरकः उपपन्नस्येह मोक्षश्चेति । तत्र अदृष्टफलैः स्वर्गः प्राप्यते । धर्माधर्माभ्या-
१० मुभाभ्यां विचित्रफलता । ज्ञानान्मोक्षः । तथा चोक्तं कौशिकेन 'तदभावे संप्रदायः। प्रमुक्तत्वाद् ब्राह्मणा-
नाम्'[8] इति । नरकोपभोगस्तु तेषामगोचरः । कथं तर्हि मन्त्रागमः । उच्यते । प्रतिषेधातिक्रमात् मनसाध्य-
वसीयते । तथा गौतमः संजगाद–'विधिस्ततोऽविपरीतः' इति । अथवा त्रिविधान्यत्र कर्माणि मेधाजन-
नादीनि विधिकर्माणि अविधिकर्माणि परिशिष्टकर्माणि विध्यविधिकर्माणि भैषज्यनामकरणविवाहादीनि
सर्वाणि कर्मलोपभावात् । अथवा त्रीणि प्रमाणान्यत्र प्रत्यक्षमनुमानमागम इति । अथेति संहि-
१५ तासंबन्धार्थः । सामर्थ्याक्षिप्तायाः । तथा च संहिताविधिरिति नाम ग्रन्थस्य । संहिताशब्दश्चा-
पि विशेषवचनतो मन्त्रविषयः । ब्राह्मणसंहिताः स्वतो विधायकार्थत्वात् । समाश्च संहितायाः कर्म-
वचनात् । प्रतीकोपलक्षणार्थः संहिताशब्दः । षष्ठ्यपि च । प्रतीकानुगतानेकप्रतीकनिर्दिष्ट-
स्य विधिः । प्रतिप्रतीकं विधिसंबन्धः । न च पदक्रमयोर्विधिस्वरूपं संहिताविध्युपकारकत्वात् । तथा
च संहिताविधिरिति ग्रन्थनाम लाघवार्थम् । 'त्वं नो मेधे'[9] द्यौश्च म'[10] इति भक्षयति'[11] इति । तथा च 'अनन्तराणि स-

इ्दारिलकृतौ कौशिकभाष्ये प्रथमा कण्डिका समाप्ता ॥ १ ॥ त्वं भूमिम्...इति पवित्रेऽन्तर्धाय हविर्निर्वपति देवस्य त्वा...इति ॥ १ ॥ 'त्वं भूमिम्'[१] इति कल्पजया पवित्रे चर्मणः व्रीहीणां चान्तरा कृत्वा हविश्चर्मणि करोति 'देवस्य त्वा' इत्यनेन मन्त्रेण। मन्त्रादेव क्रियावगतेर्निर्वपतिग्रहणं व्यक्तचोदनेति। निर्वापे मन्त्राभावात् क्रिया न स्यात् तदर्थं मन्त्रसिद्धमपि निर्वपतिग्रहणं पुनरुच्यते। दक्षिणेन हस्तेन त्रीन् मुष्टीन्। तूष्णीं चतुर्थम्। हवि-

५ र्ग्रहणमाश्येषु स्थालीपाकेषु मा भूत्। संनिकर्षे विशेषान् वक्ष्यामः। चतुर्विधाः स्थालीपाकाः— व्यक्तचोदनाः अव्यक्तचोदनाः व्यक्ताव्यक्तचोदना आश्याश्चेति। 'पुरोडाशेनेन्द्रं यजते'[२]। 'समावर्तनीयसमापनीययोश्चैषेज्या'[३]। 'इदं तद् युजे यत् किंचासौ मनसेत्याहिताग्निं प्रतिनिर्वपति'[४] 'समावृत्याश्नाति'[५] उदाहरणानि ॥ एवमग्नीषोमाभ्यामिति ॥ २ ॥ निर्वापमन्त्रे 'अग्नीषोमाभ्याम्' इति मन्त्रावयवः। अग्नीषोमयोर्निर्वापः। एवमिति पवित्रान्तर्धानादिति प्राप्तेऽर्थे 'अग्नये' इत्यस्य स्थाने 'अग्नीषोमाभ्याम्' इति विशेषः॥ इन्द्राग्निभ्यामित्यमावास्यायाम् ॥ ३ ॥ एवममावास्यायामव्यक्त-

१० चोदनायामपि पवित्रान्तर्धानादिनिर्वापः कार्यः। विशेषस्तु 'इन्द्राग्निभ्यां जुष्टं निर्वपामि'। अमावास्याग्रहणमनर्थकम्। 'इन्द्राग्निभ्यामदर्शने'[६] इत्यमावास्यासंबन्धः स्यात्। सिद्धत्वात्। नानर्थकम्। 'नित्यं पूर्वमाग्नेयम्'[७] इत्यत्र नित्यग्रहणं सहावहननेऽप्याग्नेयस्य पूर्वाणि पूर्वत्वात्। ततश्चाग्नीषोमीयैन्द्राग्नयोर्विकल्पः प्रसज्यते। तन्निवृत्त्यर्थममावास्यायामिति वचनम् ॥ नित्यं पूर्वमाग्नेयम् ॥ ४ ॥ सर्वदा चाग्नेयं विधानं प्रथमं प्रत्येतव्यम्। सहावहनने कृते विभज्यमानेषु ये तण्डुलाः प्रथमं विभक्तास्ते आग्नेया इति। अवहननानन्तरं चाग्ने-

१५ यस्य प्रथमं न व्यर्थम् ॥ निरुप्तं पवित्राभ्यां प्रोक्षत्यमुष्मै त्वा जुष्टमिति यथादेवतम् ॥ ५ ॥ चर्मस्थान् व्रीहीन् पवित्राभ्यां प्रोक्षति। यस्यै देवतायै व्रीहयो निरुप्ताः। तान् प्रोक्षति। अग्नये त्वा जुष्टं प्रोक्षामीति अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति निदर्शनम्। अव्यक्तचोदनेष्वमन्त्रकं निरुप्तग्रहणात्। निर्वापमन्त्रे यथाविधानं पाणिप्रक्षालनमन्त्रवत्[८] प्रत्ययः ॥ उलूखलमुसलं शूर्पं प्रक्षालितं चर्मण्याधाय व्रीहीनुलूखल ओप्यावघ्नंस्त्रिर्हविष्कृता वाचं विसृजति हविष्कृदा द्रवेहीति ॥ ६ ॥ उलूखलमुसलं च शूर्पं च प्रक्षालयेत्।

२० 'यद्यत् कृष्ण'[९] इति मन्त्रोक्तम्'[१०]। प्रक्षालितानि निर्वापचर्मणि स्थापयेत्। निरुप्तान् व्रीहीनुलूखले प्रक्षिप्यावघ्नन्ति यजमानः। अवघ्नंश्च हविष्कृता मन्त्रेण हविष्कृदा द्रवेहीति त्रिः वाचं विसृजति। अर्थाभिधानात्। 'यस्त्वा शिक्व'[११] इति प्रक्षालयति'[१२]। 'यद्यत् कृष्ण इति मन्त्रोक्तम्'[१०] इत्युलूखलादीनां प्रक्षालनं भवति। प्रक्षालितमिति संस्कृत-

द्रव्यम् । व्यक्तचोदनेष्वर्थविशेषनिर्देशः । चर्मण्याधायेति वचनं चर्मणि हविःसंस्कारस्य विधिकर्मसंबन्धात् । व्रीहीनिति दर्शपूर्णमासयोर्हविर्ग्रहणसंप्रत्ययार्थम् । निर्वापग्रहणं तस्य सर्वहविःसंप्रत्ययार्थत्वात् तिलाद्यर्थम् । 'पश्चादग्नेर्वाग्यतः संविशति'[1] इत्यत आरभ्य वाग्यमो वितानवत्[2] । हविष्कृदेहीति हविष्क्रियाकर्तृत्वात् । हविष्क्रियाशब्दः पवित्रेऽर्पणे । अवहननं हविष्कृतः । अवहत्येति चोत्तरेण स-
५ मानकर्तृनिर्देशात्[3] ॥ अवहत्य सुफलीकृतान् कृत्वा त्रिः प्रक्षाल्य तण्डुलान् अग्ने चरुर्यज्ञियस्त्वाध्यरुक्षत्[4] इति चरुमधिदधाति ॥ ७ ॥ अवहत्य आ तण्डुलनिर्वृत्तेः । सु सुष्ठु फलीकरणान् कृत्वा । फलीकरणाः तुषबुसाः । प्रक्षाल्योदकेन तण्डुलान् अग्ने चरुरित्यग्नौ चरुं स्थापयति । चरुग्रहणं नवकखर्परकपालानां मा भूत् । प्रतिहविः पदानां न समवायः सहत्वात् ॥ शुद्धाः पूता[5] इत्युदकमासिञ्चति ॥ ८ ॥ अनया ऋचा आसिञ्चति । 'पवित्रे अन्तर्धाय' प्रकरणातिदेशात् । सह मन्त्रेण पुरोडाशसंय-
१० वनं भवति । उदकग्रहणं पयसि मा भूत् । ब्रह्मणा शुद्धा[6] इति तण्डुलान् ॥ ९ ॥ उदकसेकानन्तरमेव तण्डुलानावपति । तण्डुलग्रहणं तिलौदनेन मा भूत् ॥ सर्वेषु कालान्तरत्वात् आवपतिग्रहणम् । आपस्तासु तण्डुलाः ॥ परि त्वाग्ने पुरं वयम्[7] इति त्रिः पर्यग्नि करोति ॥ १० ॥ अनया चरुं त्रिः पर्यग्नि करोति । मन्त्रस्तु सकृदेकद्रव्यात् । त्र्यवरार्धनिवृत्त्यर्थं त्रिर्ग्रहणम् ॥ नेक्षणेन त्रिः प्रदक्षिणमुदायौति ॥ ११ ॥ ऊर्ध्वमाभिमुख्येन आघट्टनं तण्डुलानामुदायवनम् । चरुं पर्यालोडयति । नेक्षणेनाघट्टनम् । प्रदक्षिणवचनं यथाका-
१५ मनियमार्थम् ॥ अत ऊर्ध्वं यथाकामम् ॥ १२ ॥ अतः परं आघट्टनमनाघट्टनं वा प्रदक्षिणमप्रदक्षिणं वा ॥ उत्तरतोऽग्नेरुपसादयतीध्मम् ॥ १३ ॥ उपनीय तत्रेध्ममुपसादयति ॥ उत्तरं बर्हिः ॥ १४ ॥ इध्मस्योत्तरतः ॥ अग्नये त्वा जुष्टं प्रोक्षामीतीध्मम् ॥ १५ ॥ प्रोक्षतीति वाक्यशेषः । 'एवं कर्मलिङ्गाः'[8] इति वचनात् ॥ पृथिव्या इति बर्हिः ॥ १६ ॥ पृथिव्यै त्वा जुष्टं प्रोक्षामीति बर्हिः प्रोक्षति । इध्माबर्हिषोरुभयोरुपसादितयोः प्रोक्षणार्थमिध्माबर्हिषोर्ग्रहणम् । पृथिव्या इति समस्तमन्त्रवचनम् । अधिकारादेव गतत्वात् । 'एवमग्नीषोमाभ्याम्'[9] इ-
२० ति यथा ॥ दर्भमुष्टिमभ्युक्ष्य पश्चादग्नेः प्रागग्रं निदधात्यूर्णम्रदं प्रथस्व स्वासस्थं देवेभ्य इति ॥ १७ ॥ यो मुष्टिः प्रथमो लूनः[10] तं पश्चादग्नेः पूर्वाग्रं निदधाति । निवृत्तचोदनाल्लवनकाले प्रथमस्य मुष्टेः पृथग्वचनम् । लवनकाले वचन इहावश्यग्रहणात् । आज्यतन्त्रेऽलंभावः पुनरग्रहणात् ॥ दर्भाणामपा-

दाय ऋषीणां प्रस्तरोऽसि[1] इति दक्षिणतोऽग्नेर्ब्रह्मासनं निदधाति ॥ १८ ॥ दर्भेभ्यः परिभोजनीयेभ्यः अपादाय दर्भान् प्रदक्षिणमग्नेर्वेद्यामेव 'वेदिर्यज्ञस्य'[2] इति वचनात् । ब्रह्मणः आसनं ब्रह्मासनम् । अत्र ब्रह्मवरणं[3] वितानवत् । वृतजपश्च भवति । 'वृतो जपति'[4] इति वितानवचनात् । 'अहं भूपतिः'[4] इति ॥ पुरस्तादग्नेरास्तीर्य तेषां मूलान्यपरेषां प्रान्तैरवच्छादयन् परिसर्पति दक्षिणेनाग्निमा पश्चार्धात् ॥ १९ ॥ उत्तरवेदेर्मध्यदेशादारभ्यास्तृणाति । आच्छादयन् सर्वतो गच्छति । स्तरणाय गच्छति दक्षिणेनाग्नेर्यावत् पश्चिममर्धं वेदेः ॥ परि स्तृणीहि[5] इति संप्रेष्यति ॥ २० ॥ ब्रह्मा कर्तारं संप्रेष्यति । प्रस्तरस्य प्रथमं संप्रेषवचनम् । उत्तरपक्षस्तरणार्थं पुनः संप्रेषणम् । इतरथा वेदिरपूर्णा एव । प्रेषित इति पुनः प्रयोगः स्यात् । तत् 'देवस्य त्वा' इत्यृचोऽस्योत्तरत्रवचनं पक्षसंबन्धार्थमेव । अतश्च स्तरणदेशसंप्रेषस्यातिदेशः तन्मध्यपतितत्वात् । संप्रेषयोगत्वाद् द्वावेव पक्षौ संप्रेष्यतीति वचनात् संप्रेष्यति । ब्रह्मा संप्रेष्यति कर्तारम् । ब्रह्मण अभावे यजमानः संप्रेष्यति । अभावश्चाज्ञानादशक्तेर्वा ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा परिस्तृणामीति ॥ २१ ॥ वेदिस्तरणार्थं बर्हिषः मुष्टिं गृहीत्वानेन मन्त्रेण संस्तृणाति ॥ एवमुत्तरतोऽयुजो धातून् कुर्वन् ॥ २२ ॥ यथा दक्षिणे वेद्यर्धे संप्रेषादि स्तरणान्तमेवमुत्तरेऽपि वेद्यर्धे संप्रेषादि स्तरणान्तं मन्त्रोक्तं कर्तव्यम् । एवमित्यविशेषातिदेशात् । यावन्तो मुष्टयो दक्षिणे पक्षे तावन्त उत्तरे पक्षे । कुर्यादित्यर्थः । उत्तराधिकारेऽयुग्वचनमन्यत्रैकत्वसंप्रत्ययार्थम् । तस्मादाज्यतन्त्रे सकृत् संप्रेषणम् । अन्यत् सर्वं प्रकृतिवत् ॥ यत्र समागच्छन्ति तद्दक्षिणांत्तरं करोति ॥ २३ ॥ यस्मिन् प्रदेशे स्तरणसंगमो भवति तद्दक्षिणमुपरि कार्यमुत्तरस्य ॥ स्तीर्णं प्रोक्षति हविषां त्वा जुष्टं प्रोक्षामीति ॥ २४ ॥ स्तीर्णमुच्यते उभयपक्षस्तरणे प्रकृते प्रोक्षणं यथा स्यात् । न पक्षस्तरणसंबन्धः । 'तद्यथा ब्राह्मणविधिः'[6] इत्यनेन विहितेऽपि प्रोक्षतीति वचनमनारभ्यवादात् । मन्त्राभावात् प्रोक्षणाभावः स्यात् । तत्रामन्त्रकं प्रोक्षणं कथं भवेदिति । उच्यते । मन्त्राभावश्च पुनर्वचनात् मुष्टिवत् ॥ नानभ्युक्षितं संस्तीर्णमुपयोग लभेत ॥ २५ ॥ बर्हिः संस्तीर्णमभ्युक्षणरहितमङ्गभावं न लभते । सर्वार्थो विधिः । इहवचनं यज्ञस्तीर्णस्य मा भूत् । 'पश्चादग्नेर्दर्भानास्तीर्य'[7] 'ज्योतिरायतनं संस्तीर्य'[8] इति ॥ नैध्मोऽभ्याधानम् ॥ २६ ॥ एधसः अनभ्युक्षितस्य स्यादनङ्गता ॥ नानुत्पूतं हविः ॥ २७ ॥ उत्पवनं पवित्राभ्याम् । वैश्वदेवे[9] सायंप्रातर्होमद्रव्ये[10] मधुपर्के[11] व्रातपतान्ते[12]ऽद्भुते[13]

पात्रे॥ नाग्नेयीशिनं यज्ञांगं॥ वर्ग्याप्यवनकृष्णाजिनादि॥ तस्मिन्प्रसङ्गालितोपवानानि निदधाति॥ ततस्त्र
तेन्यस्थाल्ययदाप्युष्ठ्यानिमर्वनि॥ तदास्थापयति॥ तस्मिन्निति तिनसत्रकल्पागवमादिसत्यर्थं॥ स
न्निधानादेवात्रसिद्धेः॥ स्रुवमाज्यधानीं च॥ निदधातीति श्चापकृततनृ॥ स्रुवः प्रसिद्धः॥ आज्य
धानी॥ यस्यां ग्रहग्रहण आज्यस्य॥ तयोः उपस्तरणानांतरं निधानम् न्यैषां कार्यकाले॥ ६॥ वि
लीनघृतमाज्यं गृहीत्वाधिश्रित्य पर्यग्निकृत्वोदगुद्वास्य पश्चादग्नेरुपसाद्योदगग्राभ्यां पवित्राभ्यामु
त्पुनाति॥ विलीनं द्रुतं॥ घृतं कस्यकोदारिरहितं च॥ भारत्तं॥ आज्यघृतं॥ गृहीत्वोपादाय॥ अधिश्रित्य
भौ पर्यग्निकरणं॥ उल्मुकेन उत्तरतोपनीय पश्चादग्नेस्थापयति॥ तत्रस्थं उत्तराग्राभ्यां पवित्राभ्या
मुत्पुनाति॥ ६॥ विष्णोर्मनसा पूतमसीति॥ प्रथममनेन मंत्रेणोत्पुनातीति॥ देवस्यत्वा सवितुः प्रसु
नात्॥ द्वितीयं तृतीयं॥ अच्छिद्रेण त्वा पवित्रेण शतधारेण सहस्रधारेण सुपोत्पुनामीति तृतीयत्
ष्णीं चतुर्थमुत्पुनाति॥ आज्यं गृहीत्वेति वचनात्॥ जातिवचनं आज्यशब्दः॥ अनस्मिंतत्राभावे
पि संस्कारा भावः॥ तृतीयवचनं पूर्वाभ्यामिति मंत्राभ्यामुत्सवनार्थं चतुर्थवचनात्॥ त्रित्वासि
द्धौ तृतीयवचनं मंत्रावयवानां रूपासंबंधार्थत्वात्॥ आज्यहविषूद्रपात्रोपसादनं कालमाज्यसंस्कारः
स्तनाभिधारणाभावात्॥ इहप्राकसंस्कारविधिः स्तोभिधारणार्थः॥ स्तनं हविरभिघारयतिमध्यात्
मजनूष्ठतवत्करायेति॥ यदापंक्तियुक्तं हविस्तानां नदानेन मंत्रेणाभिघारयति॥ हविर्ग्रहणमाज्येनि
वृत्त्यर्थं॥ अभिघार्योदङ्नउद्वासयति॥ स्तनमकर्महव्यमासीदृष्टमसृतस्य धामेति॥ अभिघारितस
त्॥ उत्तरार्धादिति मानयति॥ अभिघार्यानस्याग्निहविः संपत्तयार्थं॥ पश्चादाज्यस्यनिधायाल
स्त्यसमानेनोत्पुनाति॥ आज्यस्थाल्याः पश्चिमेदक्षिणस्थापयति॥ चवलंकारणं घृतेनाभिघार
णाच्चरोः॥ आज्यस्य समानेनोत्पुनाति॥ उदगग्राभ्यां पवित्राभ्यामुत्पुनातीति॥ ६ आदितूष्णीं च
तुर्थमित्येवमनेन पश्चादाज्यस्येति निविष्टत्वात्॥ आज्यसमानेति संबंधः॥ एवमंतो हविर्धर्म
तुल्यप्रयोगात्॥ अदृष्टस्यादित्यवेक्षते॥ सूक्तेन उत्तरेणावधिकर्ममंत्रेण वा समानत्वात्॥ प्रति
हविरादीनदृष्ट्याभेदात्॥ उत्तिष्ठतेत्येवं॥ उत्तिष्ठता वपश्यतेत्यर्थसूक्तेनिरुक्तः॥ परयाविधि
कर्मार्थमन्यकर्माभावात्॥ अग्निर्भूम्यामिति निरुक्तभिरूपसमारोपयति अस्मैक्षत्राण्यतमिथामि

सवे[1] ॥ नाप्रोक्षितं यज्ञाङ्गम् ॥२८॥ दर्व्युदायुवनं कृष्णाजिनादि ॥ तस्मिन् प्रक्षालितोपवातानि निदधाति ॥२९॥ ततः स्तृते प्रक्षाल्य यदा शुष्काणि भवन्ति तदा स्थापयति । तस्मिन्निति । नक्षत्रकल्प एवमादिसंप्रत्ययार्थम् । संनिधानादेवात्र सिद्धेः ॥ स्रुवमाज्यधानीं च ॥ ३० ॥ निदधातीति । ऋचा[2] प्रकृतत्वात् । स्रुवः प्रसिद्धः । आज्यधानी यस्यां ग्रहणमाज्यस्य । तयोरुपस्तरणानन्तरं निधानमन्येषां कार्यकालम् ॥ विलीनपूतमाज्यं गृहीत्वाधिश्रित्य पर्यग्नि कृत्वोदगुद्वास्य पश्चादग्नेरुपसाद्योदगग्राभ्यां पवित्राभ्यामुत्पुनाति ॥ ३१ ॥ विलीनं द्रुतं पूतं केशकीटादिरहितं च विलीनपूतम् । आज्यं घृतम् । गृहीत्वोपादायाधिश्रित्याग्नौ । पर्यग्निकरणमुल्मुकेन । उत्तरतोऽपनीय पश्चादग्नेः स्थापयति । तत्रस्थमुत्तराग्राभ्यां पवित्राभ्यामुत्पुनाति ॥ विष्णोर्मनसा पूतमसि ॥ ३२ ॥ इति प्रथमम् । अनेन मन्त्रेणोत्पुनाति ॥ देवस्त्वा सवितोत्पुनातु ॥ ३३ ॥ इति द्वितीयम् ॥ अच्छिद्रेण त्वा पवित्रेण शतधारेण सहस्रधारेण सुप्वोत्पुनामीति तृतीयम् ॥ ३४ ॥ तूष्णीं चतुर्थम् ॥ ३५ ॥ उत्पुनाति । 'आज्यं गृहीत्वा'[3] इति वचनात् । जातिवचन आज्यशब्दः । अतश्च तन्त्राभावेऽपि संस्कारभावः । तृतीयवचनं पूर्वाभ्यां मन्त्राभ्यामुत्पवनार्थम् । चतुर्थवचनात् त्रित्वसिद्धौ तृतीयवचनं मन्त्रावयवानां क्रियासंबन्धार्थम् । आज्यहविःषूदपात्रोपसादनकाल आज्यसंस्कारः शृताभिघाराभावात् । इह प्राक्संस्कारविधिः शृताभिघारणार्थः ॥ शृतं हविरभिघारयति मठ्वा समञ्जन् घृतवत् करायेति ॥ ३६ ॥ यदा पक्तियुक्तं हविर्ज्ञातं तदानेन मन्त्रेणाभिघारयति । हविर्ग्रहणमाज्यनिवृत्त्यर्थम् ॥ अभिघार्योदञ्चमुद्वासयति 'उद्वासयाग्नेः शृतमकर्म हव्यमासीद पृष्ठममृतस्य धाम'[4] इति ॥ ३७ ॥ अभिघारितं सत् उत्तरायां दिशि आनयति । 'अभिघार्य' उत्तरस्यापि हविःसंप्रत्ययार्थम् ॥ पश्चादाज्यस्य निधायालंकृत्य समानेनोत्पुनाति ॥ ३८ ॥ आज्यस्थाल्याः पश्चिमे देशे स्थापयति चरुम् । अलंकरणं घृतेन । अभिघारणं चरोः । आज्यस्य समानेनोत्पुनाति 'उदगग्राभ्यां पवित्राभ्यामुत्पुनाति'[5] इत्यादिना 'तूष्णीं चतुर्थम्'[6] इत्येवमन्तेन । पश्चादाज्यस्येति अविकृतत्वात् आज्यस्य समानेनेति संबन्धः । एवमन्तो हविर्धर्मः तुल्यप्रयोगात् ॥ अदारसृद्[7] इत्यवेक्षते ॥ ३९ ॥ सूत्रेणोत्तरेण विधिकर्म मन्त्रेणाबाध्यमानत्वात् । प्रतिहविरावृत्तिर्द्रव्यभेदात् ॥ उत्तिष्ठत[8] इत्यैन्द्रम् ॥ ४० ॥ उत्तिष्ठताव पश्यतेत्यर्थसूक्तं तिस्रः । अस्य विधिकर्मार्थत्वमन्यकर्माभावात् ॥ अग्निर्भूम्याम्[9] इति तिसृभिरुपसमादधाति अस्मै क्षत्राणि[10] एतमिध्मम्[11] द्

भिवायुर्नाम्त्वाब्रह्मसदीन॥ निरस्तग्रहणं विधिकर्मत्वात्॥ चतुर्थपंचमयोर्विकल्पः अनयोः श्रुतिका
णभावः॥ एतयोरेव विकल्पो यथास्यात्॥ युनज्मि त्वेति पंचमी॥ अग्निमग्निष्ठानंतरं तत्रैव वचन
द्व्याभिधानात्॥ पाककर्मयज्ञकाथत्रादस्य प्रयोगात्॥ अथैनमग्निमुपसमादधातीति॥ मध्यमद्र
पसमादधाति॥ निवचनात्॥ सर्वत्र विधिकल्पानित्यत्यर्थः॥ ६॥ महावेदार्थवेविरहपाध्यायवत्सरा
मणः प्रणीतस्य भट्टदारिलकृतौ द्वितीया कंडिका॥ २॥ दक्षिणतोजाड्यायनमुदपात्रमुपसाद्य
तू॥ जाड्यायनगृहणं सव्यवहारार्थं अंतरस्यायं धर्मो न भवति॥ अथोदकमासिंचतीत्यत्रैवोप
ति॥ द्वाभ्यां कल्पजाभ्यां मध्योदपात्रमुपसाद्य परिचरणेनाज्यपरिचर्य॥ नत्रोपमादनमासेचनं
नंयथास्यात्॥ ६॥ कनेनत्वासत्येनपरिषिंचामिजातवेद इति सहविर्भिः पर्युक्ष्यजीवाभिगवम्यां
योयायवेदप्रणीतः प्रपद्यत इति॥ कल्पजैः पंचभिः सहैविर्भिः रश्मिमंत्र [illegible] सिंगात्॥
क्रियावगमात्॥ पर्युक्ष्येति समस्तंत्वेनेनेति मंत्रोक्तक्रियानभिधानादस्य मंत्रसंबंधः कथंस्यात्॥

१६२

जीवास्थीनवनस्पतिभिः मरूदापोभसश्चातो निकर्तात्रब्रह्मासनमुपोस्थितनाथेतिवचनमंत्रसंप्रस्ययार्थ॥ नत्र
भिः श्रीनिर्वानिरद्राभ्यादायुषेत्युपो ऽतिष्ठति॥ प्रतिपार्हतवचयतःभ्यासः प्रतिपाहतिभेदः प्रतिपाति
दर्शनात्॥ ६॥ पश्चात्तीर्णस्यदर्भानास्तीर्याहदृष्टिव्याहृतप्ति॥ तन्यस्यसदनेभ्रीद्र्योयस्मात्पाकृत
गर्दीनब्रह्मासनमन्वीक्षते॥ पश्चिमेदत्रासीर्णस्यवेद्यामेवपरिभोजनीयानूद्र्भानास्तूणानिकर्तो
मंत्रमेकमेव॥ अनेनब्रह्मण आसनमन्वीक्षते॥ अथवाब्रह्मा पात्रीय आसनमन्वीक्षते॥ कर्तार्द्
स्यते॥ स्तीर्णमेव आसनमेव॥ सुवेनहोमः कर्तुंशक्यते॥ नथानिकेषाहननस्याहहनस्याद्
मुपसमाधायदीर्घदंडेनस्रुवेणाति॥ दीर्घदंडवचनंउद्धासना॥ चाग्रिरास्थानांस्थालीपाकाना
आसनादक्षयोर्ब्रह्मकर्तो॥ अतएवब्रह्मासनामि॥ ब्रह्माग्रहणं॥ ६॥ निरस्तः परावसुः
सहपात्रमानिरस्तः सोमसुयोस्मान्द्वेष्टियं चवयंद्विष्मइतिदक्षिणातृणानिरस्याति॥ आसना
तृणंगृहीत्वादक्षिणतः क्षिपतिसव्यहस्तेन॥ ६॥ तदन्वालभ्यजपतीदमहमर्वाग्वसोः सदने
सीदामीति॥ कल्पजेनकर्तेतिब्रह्मासनसंबंधात्॥ ६॥ विमृग्वरीमित्स्वप्रविशति॥ कर्ताब्रह्मा॥ ६

ति वा ॥ ४१ ॥ युनज्मि त्वा ब्रह्मणा[१] ... इति ॥ १ ॥ तिसृग्रहणं विधिकर्मत्वात् । चतुर्थीपञ्चम्योर्विकल्पः अनयोः । इतिकर-
णभावः एतयोरेव विकल्पो यथा स्यात् । युनज्मि त्वेति पञ्चमी । अग्निप्रतिष्ठापनानन्तरं[२] यत्तदेव च त-
द्द्रव्याभिधानात् । 'सवपाकयज्ञिये'[३] अथशब्दस्य प्रयोगात् 'अथेध्ममुपसमादधाति'[४] इति । मध्ये च उ-
पसमादधातीति वचनं सर्वत्र विधिकर्मनिवृत्त्यर्थम् ॥ महावेदार्थविद उपाध्यायवत्सश-
५ र्मणः प्रपौत्रस्य भट्टदारिलस्य कृतौ द्वितीया कण्डिका ॥ २ ॥ दक्षिणतो जाङ्मायनमुदपात्रमुपसाद्या-
भिमन्त्रयते 'तथोदपात्रम्...' इति ॥ २ ॥ कल्पजया । दक्षिणतोऽग्नेर्वेद्यां तूष्णीमुपसादनम् । उपसाद्येति वचना-
त् । जाङ्मायनग्रहणं संव्यवहारार्थम् । अन्तरस्यायं धर्मो न भवति ॥ अथोदकमासिञ्चति 'इहेत देवी...' इ-
ति ॥ ३ ॥ द्वाभ्यां कल्पजाभ्याम् । अथ 'उदपात्रमुपसाद्य परिचरणेनाज्यं परिचर्य'[५] । तत्रोपसादनमासेचना-
न्तं यथा स्यात् ॥ ऋतं त्वा सत्येन परिषिञ्चामि जातवेद इति सह हविर्भिः पर्युक्ष्य जीवाभिराचम्यो-
१० पोत्थाय वेदप्रपद्भिः प्रपद्यते...इति ॥ ४ ॥ कल्पजैः पञ्चभिः सह हविर्भिः अग्निं मन्त्रलिङ्गात्
क्रियावगमात् । पर्युक्ष्येति सत्यं त्वर्तेनेति मन्त्रोक्तक्रियानभिधानादस्य मन्त्रस्य संबन्धः कथं स्यात् ।
'जीवाः स्थ'[६] इति चतसृभिः सकृदपो भक्षयति कर्ता ब्रह्मा च । उपोत्थायेति वचनं मन्त्रसंप्रत्ययार्थम् । 'नव-
भिः'[७] शांतिवा[८] इति दशम्योदायुषा[९] इत्युपोत्तिष्ठति[१०] । प्रतिव्याहृति च पदाभ्यासः । प्रतिव्याहृति भेदः प्रतिपत्ति-
दर्शनात् ॥ पश्चात् स्तीर्णस्य दर्भानास्तीर्याहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत् पाकत-
१५ र इति ब्रह्मासनमन्वीक्षते ॥ ५ ॥ पश्चिमे देशे स्तीर्णस्य वेद्यामेव परिभोजनीयान् दर्भानास्तृणाति कर्ता । अ-
मन्त्रकमेव । अनेन ब्रह्मण आसनमन्वीक्षते । अथवा ब्रह्माऽऽत्मीयमासनमन्वीक्षते । कर्ता ई-
क्षयते । स्तीर्ण एवासनम् । एवं सुखेन होमः कर्तुं शक्यते । तथा च 'एकेष्वाहृतस्यादहन
उपसमाधाय दीर्घदण्डेन स्रुवेण'[११] इति । दीर्घदण्डवचनमुद्वासनायाग्नेराश्यानां स्थालीपाकानाम् ।
आसनाद्युभयोर्ब्रह्मकर्त्रोः । अत एव ब्रह्मासनमिति 'ब्रह्मा' ग्रहणम् ॥ निरस्तः पराग्वसुः
२० सह पाप्मना निरस्तः सोऽस्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति दक्षिणा तृणं निरस्यति ॥ ६ ॥ आसना-
त् तृणं गृहीत्वा दक्षिणतः क्षिपति सव्येन हस्तेन ॥ तदन्वालभ्य जपतीदमहमर्वाग्वसोः सदने
सीदामि...॥ ७ ॥ इति कल्पजेन । तदिति ब्रह्मासनसंबन्धाच्च ॥ विमृग्वरीम्[१२] इत्युपविश्य । उपविशति कर्ता ब्रह्मा च ।

आसनीयं ब्रह्मजपं जपति बृहस्पतिर्ब्रह्मा... इति ॥८॥ आसनीयवचनं ब्रह्मणोऽभावेऽपि कर्तुर्यथा स्यात् । ब्र-
ह्मजपवचनं भवति च ब्रह्मणोऽपि विशेषार्थत्वात् । अथवा इन्द्रमहे[१] जपप्राप्त्यर्थं ब्रह्मजपग्रहणम् ॥
दर्भैः स्रुवं निर्मृज्य निष्टप्तं रक्षो निष्टप्ता अरातयः प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इति प्रतप्य ॥ ९ ॥ मूले
स्रुवं गृहीत्वा जपति विष्णोर्हस्तोऽसि..इति ॥ १० ॥ द्वे । परिभोजनीयैर्दर्भैः सुष्ठु शोधयित्वा स्रुवममन्त्रकम् ।
५ निष्टप्तमिति प्रतापनमन्त्र एकः । मूलमालभ्य जपति । ऊर्ध्वाग्रं स्रुवं गृहीत्वा होता जपति । स्रुव-
ग्रहणं दर्व्युलूखलयोर्मा भूत् । तेषां निर्मार्जनादि भवति तदर्थापत्तेः ॥ ओं भूः शं भू-
त्यै त्वा गृह्णे भूतय इति प्रथमं ग्रहं गृह्णाति ॥ ११ ॥ आज्यधान्याः स्रुवेण संस्कृतमाज्यं गृहीत्वोत्थापयति । 'यदा-
ज्यधान्याम्'[२] इति प्रतिपत्तिदर्शनात् । प्रथमवचनं भेदार्थम् । ग्रहग्रहणं 'ग्रहानाज्यभागौ'[३] इति । ग्रहान् गृहीत्वे-
ति नक्षत्रकल्पे ॥ ओं भुवः शं पुष्ट्यै त्वा गृह्णे पुष्टय इति द्वितीयम् ॥ १२ ॥ पूर्ववद् व्याख्यातम् ॥ ओं स्वः शं
१० त्वा गृह्णे सहस्रपोषायेति तृतीयम् ॥ १३ ॥ ओं जनच्छं त्वा गृह्णेऽपरिमितपोषायेति चतुर्थम् ॥ १४ ॥ पू-
र्ववत् । न प्रतिहोमं चतुर्गृहीतम् । संस्थितहोमान्ते[४] च चतुर्गृहीतवचनात् । न च सप्तसंख्यत्वं[५] पु-
रस्ताद्धोमार्थम् । पितृमेधे पुरस्ताद्धोमोद्धारे[६] ग्रहोद्धारवचनात् । तस्मात् सर्वार्थं चतुर्ग्रहणम् । प्रत्यवदानं चा-
प्यायनं सामर्थ्यात् । यथा चाप्यायनं तथा वक्ष्यामि । तथा च 'यदाज्यधान्यां तत् संस्रावयति'[२] इत्याप्यायने लि-
ङ्गम् । आह च अस्मत्प्रपितामहो वत्सशर्मा । 'हविः प्रत्यभिघारयति'[७] । अवदानं पूर्वमिति च सिद्धम् । 'यतो
१५ यतोऽवद्यति'[८] इति वचनमन्यस्याप्यायनार्थत्वात् ॥ राजकर्माभिचारिकेष्वमुष्य त्वा प्राणाय गृह्णेऽ-
पानाय व्यानाय समानायोदानायेति पञ्चमम् ॥ १५ ॥ 'पूर्वस्य हस्तित्रसनानि'[९] इति आऽध्यायपरिसमाप्तेः[१०] राज-
कर्माणि । 'उभयतः परिच्छिन्नम्'[११] इत्याभिचारिकाणि । एषु पञ्च ग्रहा भवन्ति । ग्रहमन्त्राः– राज्यवर्ध-
नस्य[१२] त्वा प्राणाय गृह्णेऽपानाय व्यानाय समानायोदानायेति पञ्चमम् । अमुष्येति द्विषन्नामयोजन-
मुभयत्र । पञ्चमवचनं प्रतिमन्त्रग्रहणार्थम् ॥ अग्नावग्निः[१३] हृदा पूतं[१४] पुरस्ताद्युक्तो[१५] यज्ञस्य चक्षुः[१६] इति जुहोति ॥ १६ ॥ एकै-
२० का विधिकर्मत्वात् । एतैर्मन्त्रैरेकैकेन स्रुवेणाज्यधान्या आज्यमग्नौ जुहोति ॥ पश्चादग्नेर्मध्य-
देशे समानत्र पुरस्ताद्धोमान् ॥ १७ ॥ संज्ञा संव्यवहारार्थम् । 'पुरस्ताद्धोमाज्यभागसंस्थितहोम-
समृद्धिशान्तानामिति'[१७] । संव्यवहारबहुवचनं प्रत्यृचं कर्मभेदार्थम् ॥ दक्षिणेनाग्निमुदपात्र आ-
ज्याहुतीना संपातानानयति ॥१८॥ अग्नेर्दक्षिणे देशे अदूरमुदपात्रम् । तत्राज्याहुतीनां संपातानान-

यति । जाङ्मायनमेव वक्तव्यं लाघवादेव सिद्धिः । दक्षिणेनाग्निमुदपात्र इति वचनमनेकोदपात्रसंभवे अनन्तरोदपात्रसंप्रत्ययार्थम् । अनवधारितवचनं दक्षिणेनाग्निमुदपात्रसंप्रत्ययार्थम् । अवधारितवचनं संबोधार्थम् । संपाता हुतशेषस्तस्यानयनम् । कस्य । तदुच्यते ॥ पुरस्ताद्धोमाज्यभागसंस्थितहोमसमृद्धिशान्तानामिति ॥ १९ ॥ एषां संपातानामानयनम् । शान्तानां नाभिचारिकाणाम् । 'अग्नावग्निः हृदा
५ पूतम्'[१] इति पुरस्ताद्धोमाः । 'वृष्णे बृहते'[२] इत्याज्यभागौ । 'यदद्य त्वा प्रयति'[३] इति संस्थितहोमाः'[४] । 'आकूत्यै'[५] इति समृद्धिः एषां संपातानामानयनम् । तदुदपात्रे । आज्याहुतीनामेव । आज्याहुतिवचनस्य अन्यत्रापि संपातग्रहणादाज्याहुतिसंप्रत्ययार्थम् । 'आश्यबन्ध्याप्लवनयानभक्ष्याणि संपातवन्ति'[६] 'सर्वाण्यभिमन्त्र्याणि'[७] इति समृद्धिहोमानामुत्क्रमवचनम् । शान्तानामिति पूर्वविशेषणार्थम् । तत् सहैवेह संपातसद्भावार्थम् । समृद्धिश्च न पाकतन्त्रेषु । पुरस्ताद्धोमादीनां संपातप्रसङ्गः शान्तानाम् । 'अग्ने यत्ते तप'[८] इति पुरस्ताद्धोमाः'[९] ।
१० 'तथा तदग्न'[१०] इत्याज्यभागौ'[११] । 'निरमुं नुद'[१२] इति संस्थितहोमाः'[१३] इत्याभिचारिकाः । अथवाज्याहुतिग्रहणं संपातवन्तमश्नात्येवमादिषु पुरस्ताद्धोमादिषु आज्यसंप्रत्ययार्थमिति ॥ एतावाज्यभागो ॥ २० ॥ इतिः शान्तानुकर्षणार्थः । शान्तावेतावित्यर्थः । स्वत एवैतौ शान्तौ । तत्सामान्यात् पुरस्ताद्धोमसंस्थितहोमानामपि स्वतः शान्तत्वम् । आज्यभागग्रहणं संव्यवहारार्थम् । अत्र संपाताः ॥ उपाध्यायवत्सशर्मणः प्रपौत्रस्य भट्टदारिलकृतौ कौशिके तृतीया कण्डिका ॥ ३ ॥ वृष्णे बृहते...[१४] ॥ १ ॥ इति कल्पजा । उत्तरपूर्वार्धे आपराजि-
१५ ते कोणे अग्नये जुहोत्याज्यम् । आग्नेयमिति देवतायुक्तनिर्देशः । कोणे अस्य देशस्य संप्रतिपत्त्यर्थः । समानदेवतात्वाद् 'यामुत्तरामग्नेराज्यभागस्य'[१५] इति चापवादसिद्ध्यर्थम् ॥ दक्षिणपूर्वार्धे सोमाय । आग्नेये कोणे जुहोत्याज्यम् । त्वं सोम...[१६] इति ॥ २ ॥ सोमायेत्याग्नेयवत् ॥ मध्ये हविः ॥ ३ ॥ पुरस्ताद्धोमाज्यभागयोर्मध्ये प्रधानं हविर्जुहोति । तदधिकारात् । न चाज्यभागापेक्षणमेव 'पुरस्ताद्धोमसंहताम्'[१७] इति वचनात् ॥ कथं हविर्होतव्यम् । उपस्तीर्याज्यं संहताभ्यामङ्गुलिभ्यां द्विर्हविषोऽवद्यति मध्यात् पूर्वार्धाच्च ॥ ४ ॥
२० स्रुचि आज्यमुपस्तीर्य । स्रुवेणोपस्तरणम् । आज्यमल्पं घृतम् । संहताभ्यां संबद्धाभ्यामङ्गुलिभ्यां मध्यमादेशिनीभ्यां द्विः कृत्वा हविषः अवखण्डयति । हविषः मध्यात् पूर्वार्धात् । मध्यात् पूर्वार्धाद् देशात् । हविषः निरुप्तेन संबन्धः समानशब्दत्वात् 'पवित्रे अन्तर्धाय हविर्निर्वपति'[१८] इति । तथा च 'यतो यतोऽवद्यति'[१९] इति अपेक्षणार्थम् ॥ अवत्तमभिघार्य द्विर्हविः प्रत्यभिघारयति ॥ ५ ॥ यतो यतो-

ऽवद्यति तदनुपूर्वम्'। स्रुवस्य द्विरवत्तमाज्यधानीयं पात्रान्तरेण गृहीत्वाऽभिघारयति। यतः यस्मात् प्रदेशाद् द्विरवत्तं तद्धविः प्रत्यभिघारयति। प्रत्याप्याययतीत्यर्थः। हविर्ग्रहणं पूर्ववत्। क्रमप्रत्यभिघा-रणमस्योच्यते ॥ यतो यतोऽवद्यति तदनुपूर्वम् ॥ ६ ॥ यतोऽवखण्डितं तेन क्रमेण तद्धविः प्रत्यभिघारयति। अथवाऽनुपूर्वमिति वक्तव्यं लाघवात्। प्रधानहविष एव स्यात्। नाङ्गहविषः नाज्यस्य। तदर्थमेव-
५ मुक्तम् ॥ एवं सर्वाण्यवदानानि ॥ ७ ॥ उक्तेनावदानधर्मेण प्रत्यृचमवदानानि कर्तव्यानि। प्रत्यृचं होम-वचनात्। तदनुकरणात् सर्वाण्येव कर्माणीति उक्तम्। आह-'कर्मसंबन्धे हि वाक्यविकल्पः'। एकेन सिद्धे ऋग्विकल्पः स्यात्। 'स्वाहान्ताभिः प्रत्यृचं होमाः'[1] इति तत् किमर्थं प्रत्यृचहोमवचनम्। सूक्तनिवृत्त्यर्थं स्यात्। समस्तेन सूक्तेन होमो मा भूत्। नैतत्। समस्तस्य क्वचिद् विधानात् 'सर्वेण सूक्तेन जुहोति'[2] इति। तस्मात् प्रत्यृचं होमा इति संयोगवचनात्। सर्वावदानविधिश्च बहूनामेकप्रधानसंबन्धेऽष्टकायाम्[3]। प्रतिहविर्द्विरवदान-
१० संयोगार्थम्। न चैकं चतुर्गृहीतं प्रतिमन्त्रविभागेन होतव्यम् ॥ अन्यत्र सौविष्टकृतात् ॥ ८ ॥ अनेकहविः-संबन्धप्रयोगेण प्रत्यवदानं 'उपस्तीर्याज्यं सर्वेषामुत्तरतः सकृत्सकृदवदाय द्विरवत्तमभिघारयति'[4] इ-त्येतन्न भवति। एकदेवतानां च प्रत्यृचं कर्मभेदोऽवदाननिवृत्त्यर्थम्। देवताभेदेनावदानवत्। तथा च 'एकस्त्विष्टकृतः'[5] इति दर्शनात् ॥ उदेनमुत्तरं नय[6] इति पुरस्ताद्धोमसंहतां पूर्वाम् ॥ ९ ॥ अनयर्चा प्रथमामाहुतिं पुरस्ताद्धोमसंबद्धां जुहुयात्। पूर्वस्यां दिशि मध्ये हविरिति[7] वचनात् ॥ एवं पूर्वांपूर्वां संहतां जुहोति ॥ १० ॥ एवमन्या यथाग्नेयात्पू-
१५ र्वापूर्वाहुतिः पूर्वस्मिन् पूर्वस्मिन् देशे संहतायाः प्रथमायाः संहताभिः प्रत्यृचं होमाः। प्रसक्ते जुहोतौ पुनर्जु-होतिग्रहणं सर्वार्थम्। अतश्चातद्विकारेष्वष्टकादिष्वयमेव ॥ स्वाहान्ताभिः प्रत्यृचं होमाः ॥ ११ ॥ स्वा-हाकारान्तो यथा स्यात्। ऋचः स्वाहाकारान्ताः तावत्यः स्वाहान्ताः। ऋक्संप्रत्ययः प्रत्यृचमिति वचनात्। ये होमा क्वचिच्चोदितास्ते ऋचा ऋचा कार्याः। अतश्च प्रत्यृचं होमाः। ऋक्संबद्धस्य वचनस्या-विवक्षितत्वात्। यजतौ च पूर्वत्र जुहोतिप्रयोगः उभयत्र स्वाहान्ताभिः। प्रत्यृचहोमग्रहणे प्रत्यृच-
२० विधिः सर्वविषयार्थत्वं च। देवतानाम ग्रहीतव्यम्। आज्यभागे स्विष्टकृति च देवतानामग्रह-णात्। उक्तानुक्तन्यायान्न[8] वा। द्वितीय आज्यभागे 'सोमाय स्वाहा'[9] इति वचनात्। निर्वापे च देवतार्थत्वेन संकल्पनात्। अन्तवचनमृगन्तेन स्वरसंबन्धार्थम् ॥ यामुत्तरामग्नेराज्यभागस्य जुहोति रक्षो देव-त्या सा यां दक्षिणतः सोमस्य पितृदेवत्या सा ॥ १२ ॥ सौम्यादाज्यभागदेशाज्जुहोति पितरस्तामुपभुञ्जते ॥

तस्मादंतराहोतव्यादेवलोकमेवहूयंते॥यत्रउभयोर्दोषास्तस्मादंतरामध्येहोतव्या॥आहुतिः कस्तस्य
गुणोभवति॥उच्यतेवस्थानस्यबहुतोभवति॥पूर्वामितिमध्यमध्यमदेशोमध्येसोत्रैवदेवलोकएवेति
वल्गुतिःमध्येहीवर्त्मतस्पृयेतु॥७॥यांहुत्वापूर्वामपरांजुहोतिसापक्रामतीसपापीयान्यजमानोभव
ति॥यामाहुतिंहुत्वापश्चिमेदेशेयामाहुतिंजुहोति॥सापक्रामतिनामाहुतिः॥अपक्रमयतीत्यपक्राम
तीतिश्रेयसःप्रत्यावयतीत्यर्थः॥अनश्यसयजमानःश्रापादपिपादोरिइत्युक्तः॥यांपरांपरांसहता
जुहोतिसाभिक्रामतीरेवस्त्रीयान्यजमानोभवति॥यामाहुतिंप्रथमयापूर्वापूर्वाआहुतिंजुहोति॥
साअभिक्रामतिरभिक्रामतीनाम॥आभिमुख्यंगमनात्तुसयजमानईश्वरोभवति॥७॥यामन
न्तोजुहोतिसांधतयावहुर्यजमानस्यभीयतेसोधंमाडुकोयजमानोभवति॥यामाहुतिंदक्षिणाहि
तेदेशेजुहोत्यसम्भिन्नहुतांपरिभस्मनिवत्सर्पतिनामाहुतिरभ्रातृकत्वात्॥सयजमानःपंच
श्रीलोभवति॥जन्मांतराभिप्रायोनात्रीलं॥७॥यांधूमेजुहोति॥सानमसिहूयतेसोरोधकोयज
मानोभवति॥यामाहुतिंधूमएवप्रक्षिपतिसयमानोगुणवानपिअप्रकाशोभवति॥८॥यांज्व
लितोजुहोति॥नतुसर्वस्त्रेसाभवति॥तस्माज्ज्वलिताजाहोतव्यं॥यामाहुतिंज्वलितमव्येजुहोति॥
तथाआहुत्याप्रसवत्सर्वोमियस्मादिति॥देवतस्माज्ज्वलितेनहोतव्यमेव॥अन्येष्वत्रमग्निषोमादि
ष्वग्नीषोमीयस्य॥७॥उपान्यायवत्सरामेणःप्रणीतस्यमहद्दोरिलरुतोकोशिष्टनान्नुधीरू
डिका॥७॥अग्नीषोमासवेदम्भिति॥यस्यायस्यहोमविधिः॥एतमग्निषोमीयस्यापिहविषः
॥उदेनमुनरेतयतन्नापिदेशाभामेमंत्रांतरान्याह॥अस्मिन्नत्रमितिनिर्वाहकःएकःकल्पजामंत्र
यःसमानविधानत्वात्॥कर्मणांसकरणोविशेषास्त्वमित्यत्रैव॥अत्रोच्यते॥स्वाहानाभिःप्रस्तु
तेहोमाविनिसर्वार्थेनविधिवाज्यभागस्थानेरिदंस्युजुहोतीत्यर्थविधानादेवकर्मणार्थकृतार्थ
त्वेअग्नीषोमीयस्यैतदेहोमानिर्देशःकिमर्थोडिगरुवतसंपूर्णमाविष्यात॥आधूरूवरुपांतनरं
पृथक्भावंतान्॥हविषोनिर्देशात्प्रथमस्यकल्पजत्वात्॥निर्देशार्थहृतिःद्वारःपूर्वहविर्निर्देशात्
ऊर्ध्वसंवधरीतत्वाद्यववाधारोदेशामसंवधाववभवत्वात्॥तस्मादुत्तराहविर्निर्देशःउत्तरेरभिल
वंधार्थत्वात्॥किंमिककर्मदडेनमंत्रसंवंधःकेनतर्हिहविषांकल्पमंत्राणांसमुच्चयार्थत्वात्॥स

तस्मादन्तरा होतव्या देवलोक एव हूयन्ते ॥ १३ ॥ यत उभयोर्दोषः तस्मादन्तरा मध्ये होतव्या आहुतिः । कस्तस्य गुणो भवति । उच्यते । देवस्थान एव हुता भवति । पूर्वामिति मध्ये । मध्यमदेशप्रशंसा च । एवं देवलोक एवेति च स्तुतिः । 'मध्ये हविः'[१] इति स्तूयते ॥ यां हुत्वा पूर्वामपरां जुहोति सापक्रामन्ती स पापीयान् यजमानो भवति ॥ १४ ॥ पूर्वामाहुतिं हुत्वा पश्चिमदेशे यामाहुतिं जुहोति सापक्रामन्ती नामाहुतिः । अपक्रमयतीत्यपक्रामन्ती न श्रेयसः प्रत्यापयतीत्यर्थः । अतश्च स यजमानः पापादपि पापः दारिद्र्ययुक्तः ॥ यां परांपरां संहतां जुहोति साभिक्रामन्ती स वसीयान् यजमानो भवति ॥ १५ ॥ यामाहुतिं प्रथमया परांपरां संहतां जुहोति सा अभिक्रामन्ती । अभिक्रामन्ती नाम आभिमुख्यगमनात् । स यजमान ईश्वरो भवति ॥ यामनग्नौ जुहोति सान्धा तया चक्षुर्यजमानस्य मीयते सोऽन्धंभावुको यजमानो भवति ॥ १६ ॥ यामाहुतिं ह्यग्निरहिते देशे जुहोति असमिद्धे हुतोपरिभस्मनो भवत्यसौ अन्धा नामाहुतिरप्रकाशकत्वात् । स यजमानः आन्ध्यशीलो भवति । जन्मान्तराभिप्रायं ताच्छील्यम्[२] ॥ यां धूमे जुहोति सा तमसि हूयते सोऽरोचको यजमानो भवति ॥ १७ ॥ यामाहुतिं धूम एव प्रक्षिपति स यजमानो गुणवानपि अप्रकाशो भवति ॥ यां ज्योतिष्मति जुहोति तया ब्रह्मवर्चसी भवति तस्माज्ज्योतिष्मति होतव्यम् ॥ १८ ॥ यामाहुतिं ज्योतिष्मत्यग्नौ जुहोति तया आहुत्या ब्रह्मवर्चसी दीप्तिमान् । यस्माच्चैतदेवं तस्माज्ज्योतिष्मति होतव्यम् ॥ एवमस्मै क्षत्रमग्नीषोमौ[३] इत्यग्नीषोमीयस्य ॥ १९ ॥ उपाध्यायवत्सशर्मणः प्रपौत्रस्य भट्टदारिलस्य कृतौ कौशिकवृत्तौ चतुर्थी कण्डिका ॥ ॐ । अग्नीषोमा सवेदसा ...[४] ॥ १ ॥ इति यथाऽऽग्नेयस्य होमविधिः एवमग्नीषोमीयस्यापि हविषः । 'उदेनमुत्तरं नय'[५] इत्यत्रातिदेशे प्राप्ते मन्त्रान्तराण्याह । 'अस्मै क्षत्रम्' इति वैदिकः एकः । कल्पजाश्च त्रयः । समानविधानत्वात् । कर्मणां प्रकरणविशेषादेवमित्यत्रैव । अत्रोच्यते । 'स्वाहान्ताभिः प्रत्यृचं होमाः'[६] इति सर्वार्थेन विधिनाऽऽज्यभागस्य निर्दिष्टस्य जुहोतीत्यर्थविधानादत्र कर्मणामर्थवत्त्वम् । अग्नीषोमीयस्येति हविर्होमनिर्देशः । किमर्थम् । लिङ्गदेवतासंबन्धेन भविष्यति । आग्नेयवदनर्थान्तरसंबन्धार्थत्वात् । हविषो निर्देशस्य प्रथमस्याकल्पजत्वात् । निर्देशार्थः इतिशब्दः । पूर्वहविर्निर्देश उत्तरैरसंबन्ध इतिना व्यवधानात् । ऐन्द्राग्नसंबन्धो वचनात् स्यात् । तस्मादुत्तरो हविर्निर्देशः उत्तरैरभिसंबन्धार्थत्वात् । लैङ्गिकं कर्म । 'उदेनं' मन्त्रसंबन्धः केन तर्हि । हविषा । कस्मात् । मन्त्राणां समुच्चयार्थत्वात् । स-

वैमन्त्रसंबन्धं हि हविः। अतश्च प्रतिमन्त्रं कर्मभेदः। अत एव च 'अन्यत्र सौविष्टकृतात्'[1] इति कर्मप्रवृत्तिप्रसङ्गनिवृत्त्यर्थमिदम्॥ इन्द्राग्नी रोचना दिवः...इति ॥२॥ चतुर्भिः ॥ ऐन्द्राग्नस्य हविषोऽमावास्यायाम् ॥ ३॥ एवमैन्द्राग्नस्य हविषो जुहोति। ऐन्द्राग्नस्येति अग्नीषोमीयवत् व्याख्यातं प्रतिमन्त्रं व्यवहारनिवृत्त्यर्थम्। अतश्च वैश्वदेवेऽपि[2] चान्त्येन मन्त्रसंबन्धः स्यात्। तन्निवृत्त्यर्थममावास्याग्रहणम्॥ प्राक् स्विष्टकृतः पार्वणौ होमौ। 'सर्वेषा-
५ मुत्तरतः सकृत् सकृदवदाय'[3] इत्यादि चोदितं स्विष्टकृतम्। प्रथमं स्विष्टकृतः 'पूर्णा पश्चात्'[4] इत्येतौ होमौ भवतः। समृद्धिहोमाः। 'आकूत्यै त्वा'[5] इत्यादयो होमाः पञ्च। काम्याश्च ॥ ४॥ 'पृथिव्यामग्नये... इति'[6]। इतिः होमसंबन्धार्थः। अतश्च अत्रायं 'संस्थितहोमः समृद्धिः शान्तानाम्'[7] इति संव्यवहारः। पाठक्रमात् पार्वणादीनामस्य क्रमस्य सिद्धत्वादनर्थकं 'प्राक् स्विष्टकृतः' इति। अर्थवत्त्वात्। आनुमतीसद्भावे आनुमत्या ऊर्ध्वं पार्वणादयो यथा स्युः 'प्राक् स्विष्टकृतः' इति। यदा च 'अर्धाहुतिः..आनुमती'[8] तदा
१० स्विष्टकृदाज्येन। अथवा प्रधानशेषात् स्विष्टकृत्। प्रतिपत्तिकर्मसु आज्यहविः पुनः स्यात्। शेषभावाद् आज्यतन्त्रेऽपि। स्विष्टकृतो विधानं आज्यतन्त्र एव च। पार्वणयोः समुच्चयार्थं पार्वणौ होमाविति। अथवा 'आज्यभागान्तं प्राक्तन्त्रमूर्ध्वं स्विष्टकृता सह'[9] इति वचनात्। अव्यक्तचोदनेष्वाज्यहविष्षु च पार्वणादीनां क्रमान्नियमः स्यात्। अत्र त्वनियमार्थमिदम्। अथवा आनुमतीसंयोगे पार्वणादीनां निवृत्त्यर्थम्। अथवा पार्वणादीनां विकृतौ प्राप्त्यर्थमिदम्। कालसंयोगाद्धि न स्यात्। समुच्चयश्च विकृतौ कालनाम्नीदेवताभि-
१५ धानात्। स्तुतिभाजो मन्त्रा[10] इति दैवते। तथा च 'दर्शपूर्णमासाभ्यां पाकयज्ञाः'[11] इत्यर्थः। तदेतत् सूत्रं तद्वच्च समासेन विधानं पार्वणावित्युत्तरत्र व्यत्यासविधानात्॥ पूर्णा पश्चात्[4] इति पौर्णमास्याम् ॥ ५॥ पार्वणहोममन्त्रः ॥ यत्ते देवा अकृण्वन् भागधेयम्[12] इत्यमावास्यायाम् ॥ ६॥ एकैका। उभयं न। अविधिकर्मत्वादिदम्। व्यत्यासविधानं दर्शपूर्णमासविकारार्थं होमग्रहणात्। आज्यहविःप्रसङ्गाद्धिकृतौ च कालसंनिकर्षेण पार्वणयोर्व्यत्यासः। अन्यकालेषु पूर्णा पश्चादिति पूर्वपक्षे कर्मप्रयोगवचनात्। अद्भुतेषु[13] च त्रिपर्ववचनाद्[14] अनि-
२० यमः। नैमित्तिकेषु च निमित्तान्तरप्रवृत्तिः स्यात्। भैषज्येषु[15] च निर्निमित्तकत्वात्। व्यक्तचोदनेषु देवतालिङ्गात् व्यवस्था। देवताविशेषः धर्मग्रहणहेतुः। सांपदेषु वचनात् 'उत्तरस्यां सांपदं कुरुते'[16] इति। सेनाकर्मसु[17] च यात्राधिया तत्कालसंबन्धः॥ समृद्धिहोमा उच्यन्ते। आकूत्यै त्वा स्वाहा। इति प्रथमे समृद्धिहोमे। कामाय त्वा

स्वाहेति नोहेत [यो]॥ संसृष्टहोममंत्रस्याप्यंत्येन नीयमानसंकर्मसंयोगवचनात्॥ मद्देवे पृथग्यागवचना
त॥ मानयामंत्रो मानंकपूर्वा॥ मित्रातर मृत्योनेः॥ यस्य संसृष्टहोमेष्वाकूतैवेता कामायत्वा समृध्येत्वा
स्वाहेति॥ चतुर्थसंसृष्टेष्वेतमेकं चास्तावामिति पंचमः॥ आज्येन होमग्रहणात्॥ संसृष्टहोमेषु संप
त॥ पृथिव्या समयं यममात्रिभिः प्रजापतेनतद्रेनान्यन्यदेति॥ एताभिः सर्वाभिः प्रजाप
तेनत्वदेतान्यन्यानचात्र विहुयात्॥ तथयदुक्तं संसृष्टहोमाः॥ काम्याभानेकेन काम्या उच्यते॥ सत्र
तंयः प्रजापतेश्च काम्या उच्यते॥ सक्तेतयः प्रजापतेश्च काम्याः कर्मसंयोगान लिंगत्वाच कारद्वयकर
णाच्चाभयोः काम्यत्वमन्तिनिमित्तजयंतुयादिति॥ सर्वानिषु बहुमंत्रत्वात्॥ तत्रालिंगनिर्देशाद नेदे
ममंप्रत्ययः॥ संसृष्टहोमतंत्रे विनिकारणाकारणात्॥ ६॥ उपस्तीर्याज्यं सर्वेषामुत्तरतः सकृत्स
कृत्त्वदायतनत्॥ कर्मानियतनादेशात्॥ उच्यते॥ उत्तरः उत्तरादेशात्॥ अथादेशो विशेषणात्यो
ऽसर्वेषामुत्तरतः सकृत्सकृत्संबंधः॥ सर्वेषां हविषां हविरितिर्हाव संबंधः॥ न हवींषीति प्रतिषेधात्॥
वाप्याप्रतिर्होव सकृदवदानार्थं सकृदवदानं च स्रुवेण होमान देवतं स्रुवसंपदभिघारयति॥ आवनेग्र
हणं सर्वस्यावर्णस्यद्विरभिघारणं यथा स्यात्॥ न सत्यवदानयतोयतो वद्यतीति सर्वाभिघारणे प्राप्ते नहवी
षीति प्रतिषेधः सर्वेषामिति हविरभिसंबंधात्॥ समानदेशत्वाच्च कर्मसु एकहविष्ट्वेन सकृदवदानयथा
ग्रहणं एकहवींषि॥ ७॥ आदेवानामपिहोमः संभ॥ उत्तरपूर्वोर्ध्वे वस्तुनं हुत्वा सर्वप्रायश्चित्तीयानुहोति॥
उत्तरपूर्वकोणे स्रुवेण हुत्वा पृथग्भूतमित्यर्थः॥ स्विष्टकृतो प्रायश्चित्तीयानुहोमानुजुहोति॥ सर्वप्रा
यश्चित्तीयुहोतिसकृतेष्वेषि पिप्रतिसाधनं यथा स्यादेभिन्नप्रकरणानियमकारणं सर्वतंत्रस्थानात्॥
इदं विधानं प्रयोजनं मंत्रेषु पिकर्मायं पुरुषधर्मोदिति॥ कर्मसु पुनर्मेत्विंद्रियमित्युक्तमासर्वक
र्मेतिवचनात्॥ होमएव स्यापि विनियोगः॥ उभयानि कर्मसमुच्चय उभयसंयोगात्॥ सर्वप्रा
यश्चित्तीयानां पुनर्मेत्विंद्रियमित्येतयोः समुच्चयः स्वाहेष्टिमदृतिद्वादशायोः समंत्रायुने
स्कंनमिति पाठात्॥ सर्वप्रायश्चित्तीयवचनात्॥ सर्वप्रायश्चित्तीयग्रहणं जुहोति ग्रहणाच्चाज्य॥
८॥ यन्मस्कन्नं यदस्मृतीनि च स्कन्नाप्यस्मिन होमो॥ यन्मस्कन्नमिति लाजहोमः स्कंदने यदस्मृती

स्वाहा इति द्वितीये। समृद्धिहोममन्त्रे समृधे त्वा इति तृतीयपक्षे। कर्मप्रयोगवचनात्। अद्भुतेषु यथा वचना-
दनियमः। नैमित्तिकेषु च निमित्तान्तरप्रवृत्तिः स्यात् समृद्धिहोमे। आकूत्यै त्वा कामाय त्वा समृधे त्वा
स्वाहा इति चतुर्थे समृद्धिहोमे। ऋचा स्तोमम्....॥७॥ इति पञ्चमे। आज्येन होमग्रहणात्। समृद्धिहोमेषु संपा-
ताः[1] ॥ पृथिव्यामग्नये समनमन्[2] इति संनतिभिश्च॥८॥ प्रजापते न त्वदेतान्यन्य[3] इति च ॥९॥ एताभिः संनतिभिः प्रजाप-
५ ते न त्वदेतान्यन्य इत्यनया च जुहुयात्। अथ यदुक्तं 'समृद्धिहोमाः काम्याश्च'[4] इति। के ते काम्याः। उच्यते। संन-
तयः प्रजापतेश्च काम्याः क्रमसंयोगात् तल्लिङ्गत्वाच्च। चकारद्वयकर-
णाच्चोभयोः काम्यत्वम्। संनतिभिराज्यं जुहुयादिति। संनतिषु बहुमन्त्रत्वात् तत्तल्लिङ्गनिर्देशाद् हो-
मसंप्रत्यः। संनतिहोममन्त्रेष्वितिकरणकारणात्॥ उपस्तीर्याज्यं सर्वेषामुत्तरतः सकृत् स-
कृदवदाय। तत् किमनियतादेशात्। उच्यते। उत्तरतः उत्तरदेशात्। अत्र देशविशेषणार्था ष-
१० ष्ठी सर्वेषामुत्तरतः। सकृत्सकृत्संबन्धः। सर्वेषां हविषामिति हविःसंबन्धः। 'न हवींषि'[5] इति प्रतिषेधात्।
वीप्सा प्रतिहविः सकृदवदानार्थम्। सकृदवदानं च स्रुवेण होमार्थम्। द्विरवत्तम्। स्रुक्स्थम्। अभिघारयति ॥१०॥ अवत्तग्र-
हणं सर्वस्यावत्तस्य द्विरभिघारणं यथा स्यात्॥ न प्रत्यवदानम्। 'यतोयतोऽवद्यति'[6] इति प्रत्यभिघारणे प्राप्ते 'न हवीं-
षि'॥११॥ इति प्रतिषेधः। सर्वेषामिति हविरभिसंबन्धात्। समानदेशेषु कर्मसु एकहविष्ट्वेन सकृदवदानं यथा
ग्रहणमेकहविषि॥ आ देवनामपि... होममन्त्रः।* 'उत्तरपूर्वार्धेऽवयुतं हुत्वा सर्वप्रायश्चित्तीयान् होमान् जुहोति॥१२॥
१५ उत्तरपूर्वकोणेऽवयुतं हुत्वा पृथग्भूतमित्यर्थः। स्विष्टकृतम्। प्रायश्चित्तीयान् होमान् जुहोति। सर्वप्रा-
यश्चित्तीय इति प्रकृतौ। श्रेषेऽपि प्रतिविधानं यथा स्यात्। एभिर्न प्रकरणं नियतकारणं सर्वशब्दात्।
इदं विधानप्रयोजनं मन्त्रेष्वतिक्रमार्थम्। पुरुषधर्मातिक्रमे तु 'पुनर्मैत्विन्द्रियम्'[7] इति। 'उत्तमा सर्वक-
र्मा'[8] इति वचनात् होम एकस्या अपि विनियोगः। उभयातिक्रमे समुच्चय उभयसंयोगात्। सर्वप्रा-
यश्चित्तीयानां 'पुनर्मैत्विन्द्रियम्' इति चानयोः समुच्चयः॥ स्वाहेष्टेभ्यः... ॥१३॥ इति द्वादश योज्या मन्त्राः 'यन्मे
२० स्कन्नम्' इति पाठात्। सर्वप्राश्चित्तीयवचनात् सर्वप्रायश्चित्तीयग्रहणम्। जुहोतिग्रहणाच्चाज्यम्॥ इति पञ्चमी कण्डिका॥
ॐ। यन्मे स्कन्नं ... यदस्मृति[10] इति च स्कन्नास्मृतिहोमौ॥ १-२॥ 'यन्मे स्कन्नम्' इति आज्यहोमः स्कन्दने। 'यदस्मृति' इ-

* उत्तरश्चान्धमिति मन्त्रलिङ्गादयो स्विष्टकृत। अतश्च 'ऊर्ध्वं स्विष्टकृता सह'[7] इत्ययं विशेषः।

+ पृथिव्यैत्वानज्मीत्यनेन मूलं मंतरिक्षायत्वानज्मीत्यनेन मध्यमनक्ति: + ७

वि विहीनाम्भूतो ॥ ७ ॥ स्कन्नतामयनीतिसंस्थितहोम: ॥ यदप्यलाष्टर्वं सूक्तं ॥ अर्थसक्तत्वात् ॥ त्रिधि
कर्म वेद ॥ अन्यकर्मभावात् ॥ तथा च मनसस्पत इति ज्ञापकं ॥ संस्थितहोमवचनं कर्मभेदार्थं बहु
वचनं कर्मभेदार्थं मथाहुतीनामिति वचनात् ॥ आद्यसंप्रत्यय: एषां संघाता: ॥ मनसस्पत इत्यु
मसंस्थितहोमांते चतुर्गृहीतेन ॥ यनज्जुहुयात् ॥ मनसस्पत इति चतुर्गृहीतेन त्वचमाने स्यात्सं
स्थितहोमत्वं स्यात् न स्नसंघातानामावस्यात् ॥ ७ ॥ अथ पंचगृहीतं कस्मान्नोक्तं ॥ उच्यते ॥ पंच
मस्य तुर्भि: मंत्रधार्थानतासंभवाच्चतुरर्थग्रहणाभावसहभदानत्वं ॥ ७ ॥ बर्हिराज्यदोषेणानक्ति
पृथिव्यैत्वेति मूलमंतरिक्षायत्वेति मध्यं दिवेत्वेत्यग्रं ॥ वेदस्तरुणदर्भो मासाद्यपोषस्वस्थानस्थि
तं प्रशुष्यति ॥ आज्यदोषे आज्यदोषधान्यां यत्रदोषं च न्यनत् ॥ पृथिव्यैत्वानज्मीत्यनेनाग्रमनक्त्या
ज्यदोषग्रहणं प्रदक्षिणस्याप्रयोजनार्थं ॥ सर्वत्रानज्मीत्यध्याहार ॥ साकांक्षत्वात् ॥ नवाप्रत्येक
मध्याहर: पाणिप्रक्षालनमंत्रवत् ॥ ७ ॥ एवं त्रि: पाठमिति सहतंत्रेणाभ्यासप्राप्त्यर्थं ॥ संवर्हि
कामित्यनुप्रहरति यथादेवनमनयोक्तं ॥ बर्हिरनुप्रहरति ॥ अन्नोयथादेवनं दर्ददक्षिणेन प्रयुज्या
भवि: ॥ मध्यमोगवनुर्हि: स्वाहेतिमदर्भानमभ्यंक्त्वा रत्नेषुतुगच्छतेति ॥ प्रयोगादेवनाभावात् ॥
सर्वयज्ञानां वेदभागिनेत्यादौ देशोयजनदस्पतये स्रुवं ॥ स्रुवमग्नौ धारयति ॥ स्रुवमग्नौ स्थापयति ॥
कर्तृपराज्यधान्यां नसंस्रावयति ॥ भावयति ॥ आज्यधान्यां परराज्यंनत स्मिन् स्रुवे धारयति ॥ ७
संस्रावभागा इति ॥ संस्रावणं वा दक्षिणेन हस्तेन स्रुवधारणमन्येन आज्यधान्यां संस्रावणं ॥ ७
॥ स्रुवाभिघ्नता इ: न वीतय इति स्रुवं मा दूरदंडं निदधाति ॥ वेद्यां वेत्तिमत्रस्य भागपाद: ॥ प्रसादात् ॥
विमुचाभिप्रक्षणात् ज्ञानवेदसामीनिसामिध मादधाति ॥ अनया कल्पं जुयामसमिद्ग्रहणमाविचिकर्मे
तात् ॥ एषो समीनिधिलीयासमिदसीतितजीवांतेज्योतीतिमुक्तविमासि ॥ पादे नैकतोतपव: पुरस्ताद
क्षिणेन पाणिनाद्ध ॥ धर्यति ॥ ७ ॥ दक्षिणेनाग्निं नीत्वा विष्णुक्रमानुक्रमते विष्णो: क्रमोसीति दक्षिणे
न पादेनानुमंहरतीसव्यं ॥ वेधाजघनादारभ्याविष्णो: क्रमात् क्रमते कतोप्रति मंत्रसमसंख्यत्वात् ॥
अथैकएवमंत्र: कस्मान्न भवति उच्यते नामवित्तत्वात् ॥ पौनमंत्रमाव: ॥ दक्षिणेन पादेन क्रमते नाव
स्वो: क्रमोसीति त्रिग्रहणं मन्नानियमानस्त्यर्थं ॥ अनक्रयातनादिर्षनियम: ॥ संज्ञायाविभ

ति विहितोऽस्मृतौ ॥ यदद्य त्वा प्रयतीति संस्थितहोमाः ॥ ३ ॥ 'यदद्य त्वा'[१] अष्टर्चं सूक्तम्। अर्थसूक्तत्वात्। विधिकर्म चेदम्। अन्यकर्मभावात्। तथा च 'मनसस्पते'[२] इति ज्ञापकम्। संस्थितहोमवचनं क्रमभेदार्थम्। बहुवचनं कर्मभेदार्थम्। 'आज्याहुतीनाम्'[३] इति वचनात् आज्यसंप्रत्ययः। एषां संपाताः ॥ मनसस्पत[२] इत्युत्तमम्। संस्थितहोमान्ते। चतुर्गृहीतेन ॥ ४ ॥ आज्येन जुहुयात्। मनसस्पत इति च चतुर्गृहीतेनेत्युच्यमानेऽस्यासं-
५ स्थितहोमत्वं स्यात्। ततश्च संपाताभावः स्यात्। अथ पञ्चगृहीतं कस्मान्नोक्तम्। उच्यते। पञ्चमस्य चतुर्भिः संबन्धोऽर्थान्तरसंभवात्। चतुर्ग्रहणाभावेऽसहप्रदानत्वम् ॥ बर्हिराज्यशेषेऽनक्ति पृथिव्यै त्वेति मूलमन्तरिक्षाय त्वेति मध्यं दिवे त्वेत्यग्रम् ॥ ५ ॥ वेदेः स्तरणदर्भानाज्यशेषे स्वस्थानस्थिते म्रक्षयति। आज्यशेषे आज्यधान्यां यत्र शेषः स्यात्। पृथिव्यै त्वानज्मीत्यनेन मूलम्। अन्तरिक्षाय त्वानज्मीत्यनेन मध्यम्। दिवे त्वानज्मीत्यनेनाग्रमनक्ति। आज्यशेषग्रहणं म्रक्षणस्य प्रयोजनार्थम्। सर्वत्रानज्मीत्यध्याहारः। साकाङ्क्षत्वात्। न वा प्रत्येक-
१० मध्याहारः पाणिप्रक्षालनमन्त्रवत्[४] ॥ एवं त्रिः ॥ ६ ॥ पाठ्यमिति। सह तन्त्रेणाभ्यासप्राप्त्यर्थम् ॥ सं बर्हिरक्तम्[५] इत्यनुप्रहरति यथादेवतम् ॥ ७ ॥ अनयाक्तं बर्हिरनुप्रहरति अग्नौ। यथादेवतमिन्द्रस्थाने प्रयुज्याग्निम्। अग्नीषोमौ गच्छतु हविः स्वाहेति प्रदर्शनम्। अव्यक्तचोदनेष्विन्द्रं गच्छतु[५] इति प्रयोगो देवताऽभावात्। सर्वयज्ञानां चेन्द्रभक्तित्वात्[६]। 'इन्द्रं यजते' इत्युत्तरेष्वेवम् ॥ स्रुवमग्नौ धारयति ॥ ८ ॥ स्रुवमग्नौ स्थापयति कर्ता ॥ यदाज्यधान्यां तत् संस्रावयति। आनयति। आज्यधान्यां यदाज्यं तत् तस्मिन् स्रुवे धारयति।
१५ संस्रावभागाः[७]...इति ॥ ९ ॥ संस्रावणमन्त्रः। दक्षिणेन हस्तेन स्रुवधारणं सव्येन आज्यधानीसंस्रावणम् ॥ स्रुवोऽसि घृतादनिशितः[८]...इति स्रुवं प्राग्दण्डं निदधाति ॥ १० ॥ वेद्याम्। क्वचित् मन्त्रस्य भागपाठः प्रमादात् ॥ विमुञ्चामि ब्रह्मणा जातवेदसम्[९]...इति समिधमादधाति ॥ ११ ॥ अनया कल्पजया। समिद्ग्रहणमविधिकर्मत्वात् ॥ एधोऽसि[१०] इति द्वितीयां समिदसीति तृतीयाम् ॥ १२ ॥ तेजोऽसीति मुखं विमार्ष्टि ॥ १३ ॥ पादेन कर्तात्मनः मुखं दक्षिणेन पाणिना शोधयति ॥ दक्षिणेनाग्निं त्रीन् विष्णुक्रमान् क्रमते विष्णोः क्रमोऽसि[११] इति दक्षिणे-
२० न पादेनानुसंहरति सव्यम् ॥ १४ ॥ वेद्या जघनादारभ्य विष्णोः क्रमान् क्रमते कर्ता प्रतिमन्त्रं समसंख्यत्वात्। अथैक एव मन्त्रः कस्मान्न भवति। उच्यते। नामधेयत्वात् प्रतिमन्त्रभावः। दक्षिणेन पादेन क्रमते विष्णोः क्रमोऽसीति। त्रिग्रहणमत्रानियमनिवृत्त्यर्थम्। अतश्च चातनादिष्वनियमः[१२]। संज्ञाया विधा-

नात्॥ अनुसंहरति सव्यं पाणिं प्रभृत्यासह्ततं दक्षिणस्य हरति क्रमेण॥ एवं त्रिरपरिक्रमेणु॥ ६॥ सूर्यस्या
वृत्तामिति अभिप्रदक्षिणमावर्तते॥ सूर्यस्यावृतमिति न च अविधिकर्मत्वात्॥ विधिकर्मणश्च क्रमेकर्म
भावात्॥ अभिप्रदक्षिणस्यैतिवचनं नाग्निं विपर्यावर्तते प्रतिषेधात्॥ ७॥ अग्नम्मखरित्यादित्यमीक्ष
ते॥ अग्निगृह्याग्निः कर्मयज्ञाभ्याम् वचन्यामादित्यमीक्षते। कर्ता हि वासानि विधिकर्मत्वात्॥ नच
प्रत्येनेनग्रहणमभिचारलिङ्गभावात् भावं तिरान्ते॥ भावां वरो विधिकर्मत्वं इदइस्य वचनेनस्तु
चापरेणाग्निमुदपात्रं परिहृत्योत्तरेणाग्निमापोहिष्ठामयोभुव इति मार्जयित्वा बर्हिषि प्रक्षा
ग्रजलो निनयति॥ समुद्रं वः प्रहिणोमि इति इदं जनाम सर इतिवा॥ पश्चादेनेजाग्मयनं सर्वाय
नं सर्वेन हत्वा न पापयाजिनां गामं तरायनदोषो॥ इति उत्तर [illegible] आपोहिष्ठामयोभु
व इति सूक्तेनात्मनोदकेन मस्तकं [illegible] त्वा पत्योः जलो बर्हिः करोति परिभोज
नीयं वा [illegible] एकेनेन त्रबर्हिरा [illegible] प्रयोगात्॥ तस्मिन्नेव च बर्हिषि जलस्य मावर्तेत॥ समु
द्रं वः प्रहिणोमीति वा द्वाभ्यामिदं जनासइति सूक्तेन॥ आपोहिष्ठामयोभुव इति सूक्तं समुद्रं वः प्रहिणोमी
त्येनेनान्तर्यायात्॥ विकल्पेतकृतरयोः संहिताकेमवा [illegible] पूर्वस्याविधिकर्मार्थं समुद्रं वः प्रहिणोमीत्यस्य
विधिकर्मत्वमन्यकर्मभावात्॥ इदं जनासइत्यस्याविधिकर्ममन्यकर्मभावात्॥ इदं जनासइत्यस्याविधि
कर्मत्वाविधिकर्मणा विकल्पमानत्वात्॥ नु [illegible] हि विधिकल्पने॥ नातुल्ये॥ ८॥ वीरपत्न्यहं भूयासमि
ति नु सर्वविनाष्ठितापत्नीया अर्द्धं गतासन [illegible]॥ विनात्मने [illegible]॥ वीरपत्नीति [illegible]
पात्॥ [illegible] वीरपत्नीत्वं॥ स्त्रीणां सर्व [illegible] प्रजानात्रतपनयइति कल्पज्यासामिथ
माया यात्र॥ सामग्रहणमाविधिकर्मत्वात्॥ ततः सत्यत्वेनन निजातवेद इति॥ अग्निं सहावर्मीः पृ
[illegible]॥ उदग्नहीनहाविशिष्टानिस्नाकुर्यात्॥ कर्ता बहुवचनं आद्यापत्नं॥ परिषिञ्चामि जातवेद इति॥ शे
षग्रहणविशेषणात्॥ परिषिञ्च्यानिमंत्रगते वोदनत्वात्॥ ९॥ पूर्णपात्रं दक्षिणा॥ ब्रह्मरूर्ण [illegible] पो
षणसमर्थं पूर्णपात्रं॥ ब्रीह्यादिधान्यदानं॥ दक्षिणाव चनमन्यदक्षिणासंज्ञा दानेपूर्णपात्रस्य

नात् । अनुसंहरति सव्यं पादं पश्चात् संहतं दक्षिणस्य हरति क्रमते । एवं त्रिष्वपि क्रमेषु ॥ सूर्यस्या-
वृतमिति अभिदक्षिणमावर्तते ॥ १५ ॥ सूर्यस्यावृतमिति पञ्च[1] विधिकर्मत्वात् । विधिकर्म स्वक्रमे कर्म-
भावात् । अभिदक्षिणावृत्तिवचनं 'नाग्निं विपर्यावर्तेत'[2] इति प्रतिषेधात् ॥ अगन्म स्वः[3] इत्यादित्यमीक्ष-
ते ॥ १६ ॥ अग्निगृहान्निष्क्रम्य द्वाभ्यामवसानाभ्याम्[4] आदित्यमीक्षते कर्ता । द्वे अवसाने विधिकर्मत्वात् । न च
५ 'अजैष्म'[5] इत्यनेन ग्रहणमभिचारलिङ्गाभावात् । भवन्ति चान्ये भावाः । तदविधिकर्मत्वम् ॥ इन्द्रस्य वचसा...इति । ऋ-
चा । अपरेणाग्निमुदपात्रं परिहृत्योत्तरेणाग्निमापो हि ष्ठा मयोभुव[6] इति मार्जयित्वा बर्हिषि पत्न्या
अञ्जली निनयति समुद्रं वः प्रहिणोमि[7] इतीदं जनास[8] इति वा ॥ १७ ॥ पश्चादग्नेः जाङ्मायनं सर्वायत-
नं सर्वतः हृत्वा न चापि यज्ञाङ्गानामन्तरायने[9] दोष इति उत्तरदेशे स्थित्वा 'आपो हि ष्ठा मयोभु-
वः' इति सूक्तेनात्मन उदकेन प्रत्यृचं शरीरस्याभ्युक्षणं कृत्वा पत्न्या अञ्जलौ बर्हिः करोति । परिभोज-
१० नीयं वेदिस्तरणमेव । केन । तत्र बर्हिःशब्दप्रयोगात् । तस्मिन्नेव च बर्हिषि जाङ्मायनमावर्तते । 'समु-
द्रं वः प्रहिणोमि इति' द्वाभ्यां 'इदं जनास' इति सूक्तेन वा । 'आपो हि ष्ठा मयोभुवः' इति सूक्तम् । समुद्रं वः प्रहिणोमी-
त्यनेनान्तर्यात् । विकल्पे तूत्तरयोः संहिताक्रमबाधः पूर्वस्य विधिकर्मार्थः । समुद्रं वः प्रहिणोमीत्यस्य
विधिकर्मत्वमन्यकर्माभावात् । 'इदं जनास' इत्यस्य विधिकर्मत्वमन्यकर्माभावात् । 'इदं जनास' इत्यस्य विधि-
कर्मत्वं विधिकर्मणो विकल्प्यमानत्वात् । तुल्यं हि विकल्प्यते नातुल्यम् ॥ वीरपत्न्यहं भूयासमि-
१५ ति मुखं विमार्ष्टि ॥ १८ ॥ पत्नी आर्द्रेण दक्षिणेन पाणिनाऽऽत्मनो मुखं शोधयति 'वीरपत्नी' इति कल्पजेन । प्रधा-
ना ह्याशीः । वीरपत्नीत्वं स्त्रीणां सर्वकल्पेषु अभीष्टम् ॥ व्रतानि व्रतपतय[10] इति ॥ १९ ॥ कल्पजया समिध-
माधायाग्नौ । समिद्ग्रहणमविधिकर्मत्वात् ॥ ततः । सत्यं त्वर्तेन... ॥ २० ॥ इति । अग्निं सहहविर्भिः प-
र्युक्ष्य । उदग्गृहीतहविःशिष्टानि स्वीकुर्यात् कर्ता । बहुवचनमाज्यापेक्षम् । 'परिषिञ्चामि जातवेदः'[11] इति शे-
षः प्रकरणविशेषात् । परिषिच्येति मन्त्रगतचोदनत्वात् ॥ पूर्णपात्रं दक्षिणा ॥ २१ ॥ ब्रह्मकर्तृभ्याम् । पो-
२० षणसमर्थं पूर्णपात्रम् । व्रीह्यादिधान्यदानम् । दक्षिणावचनमन्यदक्षिणासंशब्दिते पूर्णपात्रस्य

निवृत्त्यर्थं ॥ यः स्वयं करोति तस्य दोषमाह ॥ ७ ॥ नादक्षिणं हविः कुर्वीत यः कुरुते कृत्यामात्मनः कुरुत
इति ब्राह्मणं ॥ ८ ॥ परेण न कारयेत् ॥ यतोऽयं दोषः श्रूयते ॥ आत्मनः कृत्यां कुरुते ॥ यो दक्षिणां न द
दाति ॥ कृत्यावत्तं हविषो विनाशहेतुत्वात् ॥ उभौ च संजायौ वैश्वदेवोऽथ वा ऋत्विजौ ॥ वर्जयित्वा स
र्वहिषः साद्या यज्ञाः सदक्षिणाः ॥ हविर्ग्रहणं प्रधानोपलक्षणार्थं ॥ न चादृष्टार्थत्वं ॥ दानमन
दक्षिणावचनात् ॥ अदृष्टकल्पनाप्रसंगाच्च ॥ उपस्थानजपाग्निमंत्रयाज्यादिषु स्वयं कर्तृत्वं ॥ द
क्षिणाभावात् ॥ वैश्वदेवे दर्शितिनिश्वानायुःकामायजेत इत्यनिष्ठलेवाणकं कोऽदात् मनुमंत्रय
ते ॥ उपसीदं जपती सुदाहरणानि ॥ ७ ॥ अन्वाहार्यं ब्राह्मणान् भोजयति ॥ अन्वाहार्य आद्ना
द्विभक्त्या ब्राह्मणा नित्ये यष्टव्यान्न भोजयति यजमानो दक्षिणादानोत्तरकालवचनात् ॥ अत
एव पाक एवाग्नौ ॥ अन्वाहार्य इति केन कारणेनेदं नामाह ॥ ८ ॥ यद्धि पशुस्यान्वितं भवति तद
न्वाहार्येणान्वाह्रियते ॥ यद्धि दृतिमन्तापूर्वेण संबंधं ॥ नहि द्विगुणमपि सत् फलसाधनसमर्थं क्रिय
ते पश्चादन्वाह्रियते इत्यन्वाहार्यं सद्दृशिभोज्यैः रूपपश्चान्नादिष्वन्वाहार्यमभिनिं संप्रयोगात् ॥ यज्ञस्य
निष्फलत्वं स्मानपत्यर्थं ॥ अन्वाहार्येण हविषः अनीशितत्वात् ॥ कथमनीशितं ॥ उच्यते हविरुच्छिष्टान्युद्वा
सयति ॥ कर्तुः संप्रयोगात् ॥ तस्येदं हविरुच्छिष्टान्युद्वासयति ॥ अत्रापि ब्राह्मणं भवति ॥ द्वयावा अन्ये दे
वाः सपर्येण्याः अन्ये देवाः देवा ब्राह्मणाः सपर्येण्याः ॥ द्वयावाः सपर्येण्या अन्ये देवाः एकोदेवानि
काम इत्यानामहे देवनिकाय सपर्यैण्यौ लाभ ॥ अभिधेयविशेषप्रतिपत्त्यर्थमाह ॥ द्वयादेवा अग्नि
रग्नीषोमावित्यादयः ॥ सपर्येण्याः देवा ब्राह्मण उच्यते ॥ यथाशीनाम भवति तदाह ॥ ८ यज्ञेन देवानां प्री
णात्यन्वाहार्येण सपर्येण्यान् योगेन्प्रणयतीं ह्यादीन्त्वाहार्यभोजनेन ॥ सपर्येण्यान् ब्राह्मणान् प्री
णाति ॥ ८ नैस्यामप्रीनाय यज्ञमवतो ॥ नि ॥ हविषान्वाहार्यं स्तुतिरिति ॥ करणं वाक्यानि देशार्थः ॥ ७
द्वे मे दर्शपौर्णमासौ व्याख्यातौ ॥ ये पौर्णमासस्य अमावास्याया अपि दीनो दर्शपौर्णमासिका प्रयो
गा दर्शपौर्णमासवाच्यौ ॥ संज्ञासंव्यवहारार्थौ ॥ द्वे मा इति निर्दिष्टस्य नाम्ना पुनरन्तवचनात् ॥ दर्श
पौर्णमासे इष्टोदयोः इमयोः सहप्रयोगार्थः ॥ ७ ॥ तदितिनं पौर्णमासव्याख्यानमिति युक्तं वक्तुं ॥ दर्शपौ
र्णमासेन पाकयज्ञादि ॥ आपाप्मतं तस्यात् ॥ नातिदेशप्रसंगात् ॥ उद्देशामावास्य मति दिष्टा नाम्ना

निवृत्त्यर्थम् ॥ यः स्वयं करोति तस्य दोषमाह । नादक्षिणं हविः कुर्वीत, यः कुरुते कृत्यामात्मनः कुरुत इति ब्राह्मणम् ॥ २२ ॥ परेणैव कारयेत् । यतोऽयं दोषः श्रूयते आत्मनः कृत्यां कुरुते यो दक्षिणां न ददाति । कृत्यावचनं हविषो विनाशहेतुत्वात् । 'उभौ च संधिजौ ज्ञेयौ वैश्वदेवौ यथर्त्विजौ । वर्जयित्वा सबर्हिषः साज्या यज्ञाः सदक्षिणाः ॥'[१] हविर्ग्रहणं प्रधानोपलक्षणार्थम् । न चादृष्टार्थत्वम् । दानमन्य-
५ द्दक्षिणावचनात् । अदृष्टकल्पनाप्रसङ्गाच्च । उपस्थानजपाङ्गानुमन्त्रणादिषु स्वयं कर्तृत्वं दक्षिणाऽभावात् । 'विश्वेदेवा इति विश्वानायुःकामो यजते'[२] इति । 'उपतिष्ठते'[३] । 'कर्णं क्रोशन्तमनुमन्त्रयते'[४] । 'उपसीदन्जपति'[५] इत्युदाहरणानि ॥ अन्वाहार्यं ब्राह्मणान् भाजयति ॥ २३ ॥ अन्वाहार्यं ओदनादिभक्ष्याणि । ब्राह्मणानिति एष कृतान्नं भोजयति यजमानो दक्षिणादानोत्तरकालवचनात् । अत एव पाक एवाग्नौ ॥ अन्वाहार्यं इति केन कारणेनेदं तदाह । यद्वै यज्ञस्यानन्वितं भवति तद-
१० न्वाहार्येणान्वाह्रियते ॥२४॥ एतदन्वाहार्यस्यान्वाहार्यत्वम् ॥२५॥ यद्विहितमत्रापूर्वेण संबद्धं तद्विगुणमपि सत् फलसाधनसमर्थं क्रियते । अनु पश्चादाह्रियत इत्यन्वाहार्यः । प्रवृत्तिर्भोज्यैः । उपस्थानादिष्वनन्वाहार्यः । अन्विति संप्रयोगात् । यज्ञस्येति फलवत्त्वप्रतिपत्त्यर्थम् । अन्वाहार्येण हविषः अनाशितत्वात् । कथमनाशितत्वम् । 'उदङ्ङिच हविरुच्छिष्टान्युद्वासयति'[६] । कर्तुः संप्रयोगात् । तस्येदं 'हविरुच्छिष्टान्युद्वासयति' ॥ अथापि ब्राह्मणं भवति । ईड्या वा अन्ये देवाः सपर्येण्या अन्य देवा देवा ईड्या ब्राह्मणाः सपर्येण्याः[७] ॥ २६ ॥ ईड्या देवाः सपर्येण्या अन्ये देवाः । एको देवनि-
१५ कायः ईड्यो नाम । अन्यो देवनिकायः सपर्येण्यो नाम । अभिधेयविशेषप्रतिपत्त्यर्थमाह । ईड्या देवा अग्निरग्नीषोमावित्यादयः । सपर्येण्या देवा ब्राह्मणा उच्यन्ते ॥ यथा प्रीता भवन्ति तदाह । यज्ञेनैवेड्यान् प्रीणात्यन्वाहार्येण सपर्येण्यान् ॥ २७ ॥ यागेन प्रीणयतीन्द्रादीन् । अन्वाहार्येण भोजनेन सपर्येण्यान् प्रीणयति ॥ तस्योभये प्रीता यज्ञे भवन्तीति ॥ २८ ॥ हविषोऽन्वाहार्यस्तुतिः । इतिकरणो वाक्यनिर्देशार्थः ॥ इमौ दर्शपूर्णमासौ व्याख्यातौ ॥ २९ ॥ यौ पौर्णमासस्य अमावास्यायाश्च चोदितौ दर्शपूर्णमासकालप्रयो-
२० गात् दर्शपूर्णमासवाच्यौ । संज्ञा संव्यवहारार्था । इमाविति विहितस्य नाम्न उत्तरत्र वचनात् । द्विवचननिर्देशो द्वयोर्द्वयोः सहप्रयोगार्थः । नत्विदं पौर्णमासं व्याख्यातमिति युक्तं वक्तुम् । 'दर्शपौर्णमासाभ्यां पाकयज्ञाः'[८] इति प्रायश्चित्तं न स्यात् । अतिदेशप्रसङ्गात् । ऊहश्चाऽऽमावास्ये अतिदिष्टानां स्या-

त्। तस्य च श्रेषः कर्मज इति प्रायश्चित्तं न स्यात्। वैतानिकदर्शपौर्णमासप्रयोगे चानयोः प्रयोगार्थ-
माग्रयणवत्[१]। अथ कस्मात्। पैठीनसिवचनात्। दूरे हीदमन्यकर्म। विशेषसमधर्मा न पठिता अश्नात्यना-
देशादिवत्[२]। यथा चेमौ दर्शपौर्णमासौ व्याख्यातौ दर्शपौर्णमासाभ्यां पाकयज्ञा इति न च प-
ठितव्यं भवति। दर्शपौर्णमासयोश्च स्तुत्या चोदना। 'अग्नीषोमाभ्यां दर्शन इन्द्राग्निभ्यामदर्शने'[३] इती-
५ दम्। नैतदेवम्। एवमुच्यमाने दर्शपौर्णमासविधौ निर्वापादीनां क्रमो नोच्यते। तथा च ग्रन्थगौरवमाच-
रेत्। पैठीनसस्य तु नायं दोषः। आज्यभागान्त एवानारभ्यवाद एष निर्वापवचनात्। आज्यभागा-
न्तं व्याख्यातम्। यत् क्वचित् प्रपदनं व्याख्यातं तदाज्यभागाभ्यामुत्तरं प्रत्येतव्यम्। तस्मिन् आज्य-
भागान्ते चरुं व्रीहीनुलूखलमुसलादि 'यद्यत् कृष्ण'[४] इति ऋचा संप्रोक्षति। सदा शान्त्युदकेन संप्रो-
क्षति। 'देवस्य त्वा'[५] इत्यर्धर्चेन वैदिकेन व्रीहीन् यथादेवतम्। पवित्रपा-
१० णिः। द्वे पवित्रे अक्षते इति वक्तव्यम्। गृहीत्वा तान् मुष्टिना निर्वपति। ब्राह्मणेभ्य इत्यस्य स्थान आवाहितदेवता-
पदं कृत्वाऽवहृत्य प्रतिमुष्टि मन्त्रावृत्तिः संस्कारभेदात्। एवमाग्रयणाद्विहितं स्यात्। न पुनः क्र-
मो रचयितव्यः। तस्य तु कौशिकप्रदेशाः। प्रदेशेषु हविर्धर्मा इत्यतोऽवश्यमेव वक्तव्यम्।
ननु निर्वापादि संसृष्टमेव। तत्र कौशिकेनापि युक्तं वक्तुं लाघवात्। देवस्य त्वामुष्मा[६] इति वा-
च्यं प्रोक्षणमन्त्रवत्[७]। अग्नीषोमाभ्यामित्यादिना च देवताविधिः। एवं च सति 'अग्नीषोमाभ्यामि-
१५ तीन्द्राग्निभ्यामित्यमावास्यायाम्'[८] इत्येतदपि न वक्तव्यं भवतीति। अवधारणार्थमिति तत्र तत्र सहाव-
हन्याद्वा 'अन्वाहार्यं प्रजापतेः'[९] इत्यस्य विकल्पार्थमिति चैव। 'आग्नेयं तु पूर्वं नित्यमन्वाहार्यं प्रजा-
पतेः'[९] इत्यत्र ग्रहणात्। प्राजापत्यविकल्पसिद्धेः। एवं तर्हि पुरस्ताद्धोमादीनां हविषो होमनिवृत्त्य-
र्थम्। सिद्धं तु यथादेवतमिति[१०] वचनात्। न पुरस्ताद्धोमे देवताया अपि लैङ्गिकत्वात्। तथा चोदिताभावे लैङ्-
गिकानामभावात्। एवं तर्हि देवतासंबन्धे सति यथाविधिप्रतिज्ञानात् विधिकर्मवदस्येदं तन्त्रं
२० स्यात्। नाद्भुतानामिदं विधिकर्मत्वात्। अथ पुनर्दर्शपौर्णमासिकमेतत् तन्त्रं पाकयज्ञेषु वच-
नात्। 'दर्शपौर्णमासाभ्यां पाकयज्ञाः'[११] इति। 'प्राङ्मुख उपांशु करोति'[१२] इत्येवमाद्याश्च परिभाषा उ-
भयार्थाः। ननु 'शुकसारिकृशानां जिह्वा बध्नाति'[१३] इति बन्धनप्राथम्यादाज्यतन्त्रमेव प्रथमं विधेयम्।

ञ्चति पश्चात् ॥ ३१ ॥ नदीप्रतीरं विलोडयमानः तितउनि सर्वसुरभिचूर्णानि वपति सूक्तेन । इतरो ग्रहगृहीतोऽवसि-
ञ्चत्यात्मानं सूक्तेन । 'स्त्रीव्याधितावाप्लुतावसिक्तौ'[१] । उपतापिनी भवति । सूक्तेनाभिषिञ्चति यथा च
मन्त्रणलिङ्गात् 'दिवः स्पृष्ट'[२] इति ॥ आमपात्र ओप्यासिच्य मौञ्जे त्रिपादे वयोनिवेशने प्रबध्नाति ॥ ३२ ॥ अपक्वे मृ-
न्मये पात्रे सर्वसुरभिचूर्णानि प्रक्षिप्यावसिच्य शिक्ये मौञ्जे त्रिपादे वयोनिवेशने प्रबध्नाति । अभि-
५ मन्त्रणसंपाताभावः प्रोपसृष्टत्वात् । मातृनाम्नोरन्यतरेण सूक्तेन ॥ अघद्विष्टा[३] शं नो देवी[४] वरणः[५]
पिप्पली[६] विद्रधस्य[७] या बभ्रव[८] इति ॥ ३३ ॥ एतेषां कर्माणि संपाताभिमन्त्रणानि । यथाकरणभावः ॥
उपोत्तमेन पलाशस्य चतुरङ्गुलेनालिम्पति ॥ ३४ ॥ उपोत्तमं 'विद्रधस्य'[७] इत्यनेन पलाशस्य काष्ठेन चतुरङ्-
गुलेन पिष्टेनालिम्पति विद्रधम् । पृथग्वचनं लिङ्गिन उपतापार्थम्[९] । पञ्चमाधिकारवचनेऽस्यापि वरुण-
गृहीतभैषज्यत्वं स्यात् । प्रथममभिमन्त्र्य पुनरालेपने सूक्तम् ॥ प्रथमेन मन्त्रोक्तं बध्नाति ॥ ३५ ॥ 'अघद्विष्टा'[३] इ-
१० त्यनेन सूक्तेन संपातवन्तं यवं कृत्वा पुनः सूक्तेन बध्नाति यवमणिम् । पिशाचनाशनम् ॥ द्वितीये-
न मन्त्रोक्तस्य संपातवतानुलिम्पति ॥ ३६ ॥ 'शं नो देवी पृश्निपर्णी'[४] इत्येतेनांशुमत्याः संपातवत्करणम् । त-
तोऽनुलेपनं सूक्तेन । अवयवस्य संपातवत्करणं षष्ठीश्रवणात् । पिशाचनाशनम् ॥ तृतीयेन मन्त्रोक्तं बध्नाति ॥ ३७ ॥
'वरणो वारयाता'[५] इत्यनेन वरणमणिं बध्नाति वचनात् । यक्ष्मनाशनम् ॥ चतुर्थेनाऽऽशयति ॥ ३८ ॥ 'पिप्पली
क्षिप्तभेषजी'[६] इत्यनेन पिप्पलीं संपातवतीं कृत्वा पुनः सूक्तेनाऽऽशयति । क्षिप्तभैषज्यम् ॥ पञ्चमेन वरुण-
१५ गृहीतस्य मूर्ध्नि संपातानानयति ॥ ३९ ॥ वरुणगृहीतो जलोदरी । 'विद्रधस्य बलासस्य'[७] इत्यनेन शिरसि सं-
पातानानयति । प्रथममभिमन्त्र्य ॥ उत्तमेन शाकलम् ॥ ४० ॥ 'या बभ्रव'[८] इत्यनेन शाकलो बन्ध्यः । प्रथमं
संपात्य 'ब्रह्मणा तेजसा'[१०] इति । 'दशानां शान्तवृक्षाणां शकलानि'[११] इति शाकलः । यक्ष्मादिभैषज्यम् ॥ उद-
गाताम्[१२] इत्याप्लावयति बहिः ॥ ४१ ॥ क्षेत्रियगृहीतस्य भैषज्यम् । गृ-
हाद् बहिराप्लावयत्यृचा ॥ अपेयम्[१३] इति व्युच्छन्त्याम् ॥ ४२ ॥ ऋचः कर्म । व्युच्छन्त्यां प्रभातसमये आप्लावयति ॥
२० बभ्रोः[१४] इति मन्त्रोक्तमाकृतिलोष्टवल्मीकौ परिलिख्य जीवकोषण्यामुत्सीव्य बध्नाति ॥ ४३ ॥ किम् । मन्त्रोक्तम् ।
बभ्रुवर्णस्यार्जुनस्य काण्डशेषम् । यवपललीति यावः । तिलपिञ्जीति तिलकुरुलकः । आकृतिलोष्ट-
वल्मीकौ प्रसिद्धौ । परिलिख्य संचूर्ण्य । जीवकोषणी जीवतः पशोश्चर्माङ्कस्थलिका । तस्यां प्रक्षिप्य

उत्सीव्य सूच्या बध्नाति । क्षेत्रियभैषज्यम् । क्षेत्रियः कौलो व्याधिः । ऋचा एव कर्म ॥ इति भट्टदारिलकृतौ कौशिकभाष्ये चतुर्थेऽध्याये द्वितीया कण्डिका ॥ २ ॥ ॐ । नमस्ते लाङ्गलेभ्यः[1] इति सीरयोगमधिशिरोऽवसिञ्चति ॥ १ ॥ हलं युक्तं गोभ्यां क्षेत्रियरोगिणः शिरस उपरि कृत्वाऽवसिञ्चत्युदपात्रम् । क्षेत्रियः कौलो व्याधिः ॥ नमः सनिस्रसाक्षेभ्य[2] इति शून्यशालायामप्सु संपातानानयति ॥ २ ॥ शून्ये गृहे तन्त्रं कृत्वाऽप्सु संपातानानयति ॥
५ उत्तरं जरत्खाते सशालतृणं ॥ ३ ॥ जीर्णे गर्ते तस्या एव शालायास्तृणानि प्रक्षिप्य उत्तरसंपातानानयति ॥ तस्मिन्नाचामयति । तस्मिन् सशालतृणे जरत्खातेऽवस्थितं क्षेत्रियगृहीतमाचामयति संपातोदकेन । आप्लावयति ॥ ४ ॥ दशवृक्ष[3] इति शाकलः ॥५॥ 'दशानां शान्तवृक्षाणां शकलानि'[4] इत्ययं शाकलो मणिः। शकलसमुच्चयो मन्त्रलिङ्गात् ॥ दश सुहृदो जपन्तोऽभिमृशन्ति ॥ ६ ॥ अथवा दश मित्राणि जपन्ति एव एतत्सूक्तमभिमृशन्ति पिशाचगृहीतम् ॥ क्षेत्रियात्त्वा[5] इति चतुष्पथे काम्पीलशकले पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति ॥ ७ ॥ क्षेत्रिया-
१० त्त्वेति सूक्तेन चतुष्पथे कर्म कर्तव्यम् । काम्पीलशकलैर्व्याधितं गात्रसन्धिषु बध्नाति पिञ्जूलीभिराप्लावयति। पिञ्जूल्युदकं प्रसिद्धम् । क्वचित् दर्भपिञ्जूलीग्रहणात्[6] । ताभिः संपातिताभिरद्भिः पिञ्जूलीभिः सहिताभिरुपरि शिरसोऽभिषिञ्चति । संपाता आप्लावनत्वात्[7] ॥ अवसिञ्चति ॥ ८ । अथवा अवसिञ्चत्यसंपातिताभिः ॥ 'स्त्रीव्याधितौ'[8] इति स्मर्तव्यम् ॥ पार्थिवस्य[9] इत्युद्यति पृष्ठसंहितावुपवेशयति ॥ ९ ॥ प्राङ्मुखं व्याधितं प्रत्यङ्मुखमव्याधितं शाखासूपवेश्य वैतसे चमस उपमन्थनीभ्यां तृष्णागृहीतस्य शिरसि मन्थमु-
१५ पमथ्यातृषिताय प्रयच्छति ॥ १० ॥ तस्मिंस्तृष्णां संनयति ॥ ११ ॥ उद्यति भगवति सवितरि व्याधितौ पृष्ठसंबद्धावुपवेशयति। प्राङ्मुखं व्याधितं प्रत्यङ्मुखमव्याधितमिति दिङ्नियमः। वैतसीषु शाखासूपवेशयति व्याधितं वैतसे चमसे सक्तून् कृत्वोदकं प्रक्षिप्य वैतसीभ्यामुपमन्थनीभ्यां तृष्णागृहीतस्य शिरस्याधाय चमसं मन्थमुपमथ्नाति । तमुपमथ्याव्याधिताय प्रयच्छति। तस्मिन्नव्याधिते तृष्णां संक्रामयति। उपवेशयतीत्युभयत उपवेशनार्थम् ॥ उद्धृतमुदकं पाययति ॥ १२ ॥ अप्सु चावस्थितं पार्श्वान्तरस्थ उद्धृतमुदकमभिमन्त्र्य । पाययति ॥
२० सवासिनौ[10] इति मन्त्रोक्तम् ॥ १३ ॥ समानवसनौ भूत्वा मन्थं पिबत इत्यर्थः। सूक्तेनाभिमन्त्र्य । सवासिनावितिग्रहणं विशिष्टक्रियाविधानार्थम् ॥ इन्द्रस्य या मही[11] इति खल्वानलगण्डुहननान्[12] घृतमिश्रान् जुहोति ॥ १४ ॥ खल्वाः कृष्णचणकाः । तानाज्यमिश्रान् जुहोति । अलगण्डवः क्रिमिविशेषः ।

एकक्रमिक इति प्रसिद्धः । उत्तराणि सर्वक्रिमीणाम् ॥ वालान् कल्माषे काण्डे सव्यं परिवेष्ट्य संभिनत्ति ॥ १५ ॥ कृमिणो बालान् गृहीत्वा कल्माषे काण्डे कल्माषवर्णे शरे सव्यं परिवेष्ट्य संभिनत्ति ॥ जर्जरीकृतान् अग्नौ । प्रतपति ॥ १६ ॥ पुनः सूक्तम् ॥ आदधाति ॥ १७ ॥ तान् शलान् शरस्थान् सूक्तेनैव । संभेदनादिषु मन्त्रावृत्तिः तिङभिधानात् । कर्मान्तरत्वेऽसति पुनः आधानग्रहणमनर्थकं स्यात् । नात्र तन्त्रमहोमत्वात्[1] ॥
५ सव्येन दक्षिणामुखः पांसूनुपमथ्य परिकिरति ॥ १८ ॥ सव्येन हस्तेन पांसून् धूलिमुपमथ्य । उपमन्थनं मर्दनम् । परिकिरति । अरूंषि क्रिमीणाम् ॥ संमृद्नाति ॥ १९ ॥ तान् पांसून् संमर्दयति । प्रकीर्णान् करोति ॥ आदधाति ॥ २० ॥ अथ च समिध आदधाति ॥ उद्यन्नादित्य[2] इत्युद्यति गोनामेत्याहासाविति ॥ २१ ॥ उद्यति सवितरि कर्ता गोस्वामिनमाह गोर्नाम कथयस्वेति । विशेषनामाभिप्रायमसाविति ॥ सूक्तान्ते[3] ते हता इति ॥ २२ ॥ सूक्तस्यान्ते अन्यः 'ते हताः क्रिमयः' इति ब्रूयात् ॥ प्राचीम् । कृत्वा प्राङ्मुखां गाम् । असाविति विशेषनामग्रहणार्थकं
१० तु । दर्भैरभ्यस्यति ॥ २३ ॥ दर्भैस्तदाभिमुख्येनास्यति वातिकवत् । प्रत्यृचमभ्यसनं वाक्यभेदात् ॥ मध्यन्दिने च ॥ २४ ॥ प्राङ्मुखां गाम् । चेति पूर्वकर्मातिदेशार्थः ॥ प्रतीचीमपराह्णे ॥ २५ ॥ प्रत्यङ्मुखां गां कृत्वा अपराह्णे एवं दर्भैरभ्यस्यति ॥ बालस्तुकामाच्छिद्य खल्वादीनि ॥ २६ ॥ व्रणात् बालस्तुका बालजटा । 'खल्वानलाण्डून् घृतमिश्रान् जुहोति'[4] इत्यादीनि कर्माण्यतिदिश्यन्ते । विशेषातिदेशात् ॥ अक्षीभ्यां त[5] इति वीबर्हम् ॥ २७ ॥ विबर्हणं मार्जनम् । पर्वसु ग्रन्थिविवर्तनमेके ॥ उदपात्रेण संपातवतावसिञ्चति ॥ २८ ॥ उदपात्रं संपात-
१५ वत् कृत्वा तेनावसिञ्चति । 'स्त्रीव्याधितौ'[6] इति स्यात् । सर्वभैषज्यम् ॥ हरिणस्य[7] इति बन्धनपायनाचमनशङ्कुधानावज्वालेनावनक्षत्रेऽवसिञ्चति ॥ २९ ॥ बन्धनं विषाणं हरिणस्य । तस्यैव पायनमाचमनं हरिणलोममिश्रम् । शङ्कुधानं कथितम्[8] । तत् प्रदीप्योदके निर्वाप्य तेनोष्णेनोदकेनापगतनक्षत्रे कालेऽवसिञ्चति क्षेत्रियगृहीतम् । बन्धनादीनामवज्वालोदकम् । अतश्च षष्ठीसमासः । पूर्वो द्वन्द्वः । बन्धनं पायनमाचमनं च बन्धनपायनाचमनानि । तेषां शङ्कुधानावज्वालं बन्धनपायनाचमनशङ्कुधानावज्वालेनावनक्षत्रेऽवसि-
२० ञ्चति ॥ अमितमात्रायाः सकृद्गृहीतान् यवानावपति ॥ ३० ॥ अपरिमितपरिमाणाद् यवराशेः सकृद् हस्तेन गृह्णाति यवान् । प्रत्यृचमावपति । ग्रहणं तु सकृत् ॥ भक्तं प्रयच्छति ॥ ३१ ॥ अभिमन्त्र्य भक्तं ददाति ॥ मुञ्चामि त्वा[10] इति ग्राम्ये पूतिशफरीभिरोवनम् ॥ ३२ ॥ ग्राम्यो व्याधिः । मिथुनसंयोगात् पूतिदूरिति

प्रीमन्त्राभिधानः ॥ प्रतिलम्भपर्ययः ॥ प्रतिलम्भधार्मासिकः ॥ नाभिमित्रं मादनमपाचयित्वा व्याधिनाम
यच्चलोनिमन्त्रः ॥ ...नु ॥ भन्त्रमयच्चन्नो निमन्त्रणं ॥ ७ अरण्यानिष्ठ्याघ्रामयज्ञाला ज्वालेनान
न्तर्वंतर्नामिंश्चित्येन ॥ ओरण्यैनिनि अरण्यस्थगामयानि ज्ञानाः पाप्ययवर्णैरज्वाल अर
ण्यानिग्रामघ्रानः ज्वालस्तनावागनने कालवसिंचति विक्लोवज्वालः माधनत्वात्
॥ ७ मत्प्राणैर्मृत्वाम्लानयति ॥ अनुवाकाभ्यामुवरोर्षन्त्याइत्यस्ट आल्लवनमत्र कमभेदात् ॥
सर्वभैषज्याविधानाभावात् ॥ कन्त्रकमभेदः सर्वभैषज्यार्थः ॥ मृगारसूक्ताथाम्यात् ॥ ७ इति श्रीम
द्भट्टदारिलकृतौ कौशिकभाष्ये चतुर्थेऽध्याये तृतीया कण्डिका ॥ ३ ॥ आम्रसणाज्जतद्दोननद्व
कायांनीवंकृत्वाजपत्वाचमयुत्यास्कतानि ॥ नमस्तेस्तकायेत्स्वकानपर्णानिरमुनरंजमस्लमने
नरत्वात् ॥ आचमयत्यभिमंत्र्यानिभैरूनमस्तुत्तानि ॥ अप्सबाभ्युत्थुत्यभिमंत्र्य ॥ ७ कमुकत्रा
कलंमधुघृतौजरद्दजिनावकारज्वालेन ॥ कमुकः बंधनः कार्मुकदीनयस्यनामभवीनिन
स्यत्राकलंकमुकत्राकलंडदकेनाभ्युक्ष्यजीर्णवासमारज्जवर्मणा ॥ अवकरः उत्कुरोटिका
तर्णानिमथ्यनमेनज्वालमावसिंचति ॥ विषेदूर्मानिर्देशसामान्याभावात् ॥ ७ संपातवत्सदृष्टात्क्षेक
पालाभ्यांदृश्याभ्यामयुसुपमथ्यरधिधारणापिंडानन्वबंधकायच्छदयति ॥ संपातवानिदृश्युत्रमथुस्थ
नि ॥ कथमुच्यते विषणपुरिवनाम्याभिधुम्यामुपमथ्यरधिधारणधारणापिंडान् स्वाल्याच्छदयति ॥ विषेदूः
॥ रोपाशान्तिधननामधार्ग्यानीति धारण्यां भूमिमन्त्रमयानपिंडान्संपात्तयुतैकमकोरणं ॥ ७ हरिद्रां सर्पि
षिपाययति ॥ हरिद्रासर्पिषा ॥ अनुवृत्तीकृत्यपूर्वतंत्सर्पिषाभिमंत्र्य समृक्तिं भ्यांविध्वानेपाययति ॥ वि
षेदूम ॥ ७ रोहिणीत्यिवनस्पत्यवसिंचति ॥ रोहिणीत्यनेनसूक्तेनाभिमंत्र्य लक्ष्यमाणवननसत्त्रका
लेवसिंचति ॥ ७ दृष्टानकंपाययति दृष्टानकं घृतं क्षीरं नदीभमंत्र्यपाययति ॥ ७ अभ्यनक्ति ॥ घृतेना
भिमंत्र्य ॥ रोहण्यां पातकाचनु ॥ ७ आपश्यतीति मरुपुष्पामणिंवध्नाति ॥ मरुपुष्पानि सर्प्या मणिगृह
णामधिबंधनं स्थापनं संपातस्य यत्र मण्याकारार्थेन ॥ पिशाचनाशनेन ॥ भवाशर्वौ स्वनाभि ति
सूक्तेन कापील पर्णपुटप्रसमुदकेन पूर्णान् संपातवतः कृत्वा पश्चाद्दक्षिणेन हस्तेनावसि
चति व्याधितस्य ... हस्तेन पुटकमेकैकं पश्चाद्व्याधितस्य क्षिपति सर्वभैषज्ये ॥ ७ तयापूर्वमिति

प्रसिद्धाभिधानः । पूतिशफर्यः पूतिगन्धा मत्सिकाः । ताभिर्मिश्रमोदनं श्रपयित्वा व्याधिताय । प्रयच्छतीति प्रकरणात् । 'भक्तं प्रयच्छति'[1] इति प्रकरणम् ॥ अरण्ये तिलशणगोमयशान्तावज्वालेनावनक्षत्रेऽवसिञ्चति ॥ ३३ ॥ अरण्ये तिलाः । अरण्ये शणाः । अरण्ये गोमयानि । शान्ता ओषधयः । एतैरवज्वालः अरण्ये तिलशणगोमयशान्तावज्वालः । तेनापगतनक्षत्रे कालेऽवसिञ्चति । विकल्पोऽवज्वालसाधनत्वात् ॥

५ मृगारैर्मुञ्चेत्याप्लावयति ॥ ३४ ॥ अनुवाकाभ्यां[2] 'मुञ्च शीर्षक्त्या'[3] इत्यृचा । आप्लावनमवनक्षत्रे । क्रमभेदः । सर्वभैषज्यविधानाभावात् ऋचः क्रमभेदः । सर्वभैषज्यार्थः मृगारवद्यथा स्यात् ॥ इति श्रीमहावेदार्थविदः भट्टदारिलकृतौ कौशिकभाष्ये चतुर्थेऽध्याये तृतीया कण्डिका ॥ ३ ॥ ब्राह्मणो जज्ञे[4] इति तक्षकायाञ्जलिं कृत्वा जपन्नाचमयत्यभ्युक्षति ॥ १ ॥ 'नमस्तक्षकाय' इत्युक्त्वा जपन्निदमुत्तरं[5] च सूक्तमनन्तरत्वात्[6] । आचमयति । अभिमन्त्र्य विषे रुतमभ्युक्षति । अथवाऽभ्युक्ष्य अभिमन्त्रयते ॥ कृमुकश-

१० कलं संक्षुद्य दूर्शजरदजिनावकरावज्वालेन ॥ २ ॥ कृमुकः बधकः । कार्मुक इति यस्य नाम भवति । तस्य शकलं कृमुकशकलम् । उदकेनाभ्युक्ष्य जीर्णं वासः । जरच्चर्म । अवकरः उकुरटिकातृणानि । अन्यतमेनावज्वालेनावसिञ्चति विषे रुतम् । निर्देशसामान्यात् ॥ संपातवत्युदपात्र ऊर्ध्वफलाभ्यां दिग्धाभ्यां मन्थमुपमथ्य रयिधारणापिण्डानन्वृचं प्रकीर्य छर्दयते ॥ ३ ॥ संपातवति उदपात्रे मन्थं मथ्नाति । कथम् । उच्यते । विषेण पुङ्खिताभ्यामिषुभ्यामुपमथ्य रयिधारणापिण्डान् खात्वा छर्दयते विषे रुतम् ।

१५ रयिरिति धननाम[7] । धारयतीति धारणा भूमिः । तन्मयान् पिण्डान् । संपातयुक्तं प्रकिरणम् ॥ हरिद्रां सर्पिषि पाययति ॥ ४ ॥ हरिद्रा प्रसिद्धा । तां चूर्णीकृत्य घृते प्रक्षिप्याभिमन्त्र्य सूक्ताभ्यां[8] विषार्तं पाययति विषे रुतम् ॥ रोहिणी[9] इत्यवनक्षत्रेऽवसिञ्चति ॥ ५ ॥ रोहिणीत्यनेन सूक्तेनाभिमन्त्र्य लाक्षेणापगतनक्षत्रे कालेऽवसिञ्चति ॥ पृषातकं पाययति । पृषातकं घृतक्षीरम् । तदभिमन्त्र्य पाययति । अभ्यनक्ति ॥ ६ ॥ घृतेनाभिमन्त्र्य । रोहिण्येति केचित् ॥ आ पश्यति[6] इति सदंपुष्पामर्णिं बध्नाति ॥ ७ ॥ सदंपुष्पा त्रिसन्ध्या । मणिग्रह-

२० णं मणिबन्धनस्थापनसंप्रत्ययार्थं मण्याकारार्थं च । पिशाचनाशनम् ॥ भवाशर्वौ[8] इति सप्त काम्पीलपुटानपां पूर्णान् संपातवतः कृत्वा दक्षिणेनावसिच्य पश्चादपविध्यति ॥ ८ ॥ 'भवाशर्वौ मन्वे वाम्' इति सूक्तेन काम्पीलपर्णपुटान् सप्त उदकेन पूर्णान् संपातवतः कृत्वा प्रत्यृचं दक्षिणेन हस्तेनावसिञ्चति व्याधितम् । सव्येन हस्तेन पुटमेकैकं पश्चाद् व्याधितस्य क्षिपति । सर्वभैषज्यम् ॥ त्वया पूर्वम्[10] इति

कोशेन । शमीकोशेन । शमीचूर्णानि भक्ते ॥ ९ ॥ मेषशृङ्ग्याः फलचूर्णानि शम्याः कोशेन भोजने प्रक्षिप्या-
भिमन्त्र्य भोजयेत् ॥ अलंकारे ॥ १० ॥ अथ चालंकारे चूर्णानि प्रक्षिप्यालंकुर्यात् पिशाचगृहीताय ॥
शालां परितनोति ॥ ११ ॥ मेषशृङ्ग्या पिशाचगृहं सर्वतो वेष्टयत्यभिमन्त्र्य ॥ उतामृतासुः [१] इत्य-
मतिगृहीतस्य भक्तं प्रयच्छति ॥१२॥ अमतिगृहीतः त्रिवर्गशून्यबुद्धिः । तस्मै भक्तमभिमन्त्र्य प्रयच्छति ॥
५ कुष्ठलिङ्गाभिर्नवनीतमिश्रेणाप्रतीहारं प्रलिम्पति ॥ १३ ॥ 'यो गिरिष्वजायथाः' [२] इति सूक्तम् । 'अश्वत्थो देवस-
दनः' [३] इति द्वे ऋचे । आभ्यां पूर्वसूक्तसमुच्चिताभ्यां नवनीतमिश्रेण कुष्ठेन अप्रतीहारं प्रलिम्पति ।
कुष्ठं नामैतत् परिहारार्थं कथितम् । ज्वरभैषज्यम् ॥ लाक्षालिङ्गाभिर्दुग्धे फाण्टान् पाययति ॥ १४ ॥ 'रोहि-
ण्यसि' [४] इति सूक्तम् । 'रात्री माता' [५] इति च । रोहिणीशब्दस्य लाक्षापर्यायत्वात् । फाण्टानुष्णान् क्षीरे पाययति । अरुषो
भैषज्यम् ॥ ब्रह्म जज्ञानम् [६] इति सूतिकारिष्टकौ प्रपादयति ॥ १५ ॥ 'ब्रह्म जज्ञानम्' 'अनाप्ता ये' [७] इत्यनेन सू-
१० तिकागृहीतमरिष्टगृहीतं च प्रपादयति । कानिचित् पदानि गृहान्निष्क्रामयति । 'पूर्वं प्रपाद्य प्रयच्छति' [८] ।
अरिष्टं नामाङ्गस्यन्दनकलहलाभूतादि ॥ मन्थाचमनोपस्थानमादित्यस्य ॥ १६ ॥ मन्थ-
शेषो व्याधिशेषे । मन्थं पाययति । सर्वभैषज्यम् । अथ चाऽऽचमयति । उपस्थानमादित्यस्य । उ-
भयोरङ्गं मन्थाचमनयोरुपस्थानमिति । सूक्तस्य द्विरभ्यासः ॥ संपातानां सत्त्वे । दिवे स्वाहा [९]... ॥ १७ ॥ त्रिभिरेको होमः ।
पृथिव्यै स्वाहेति चतुर्थो होमः । उत्तमाभ्यामृग्भ्यां [१०] प्रत्यृचम् ॥ द्वौ पृथिव्याम् ॥ १८ ॥ पृथिव्यां संपातौ । न सर्वेण सू-
१५ क्तेन । क्वचित् 'सर्वेण सूक्तेन' [११] वचनात् ॥ तौ प्रत्याहृत्याप्लावयति ॥ १९ ॥ यौ पृथिव्यां संपातौ तौ गृहीत्वोदकक-
लशे नीत्वाप्लावयति । सर्वभैषज्यम् । सयवे चोत्तरेण.. ॥ २० ॥ इमं यवमित्यनेन [१२] यवं बध्नाति । आज्यतन्त्रम् ॥ इति श्रीभ-
ट्टदारिलकृतौ कौशिकभाष्ये चतुर्थेऽध्याये चतुर्थी कण्डिका ॥ ॐ । दर्दिहि [१३] इति तक्षकार्थेत्युक्तम् [१४] ॥ १ ॥ 'ब्राह्मणो
जज्ञे' [१५] इत्येतत् सूक्तं सर्वकर्मातिदेशार्थमितिकरणात् । तक्षकायेत्ययं न चोत्तराभिग्रहणविभागो विभ-
क्त्यन्तरयोगात् । तस्मात् 'दर्दिहि' इत्यस्य सूक्तस्य प्रतिकर्मान्तरं कर्मातिदेशः ॥ द्वितीयया ग्रहणी ॥ २ ॥ 'यत्ते अ-
२० पोदकम्' [१६] इति इयं ग्रहणी कटकबन्ध इत्यर्थः ॥ कथं कटकबन्धः । आह । सव्यं परिक्रामति ॥ ३ ॥ मृदादितोऽप्र-
दक्षिणं रेखां करोति बन्धेन ॥ शिखां सिचि स्तम्बानुद्ग्रथ्नाति ॥ ४ ॥ द्वितीयया विषरुताय शिखां बध्नाति । अथ-
वा सिचि स्तम्बान् बध्नाति । एवं ग्रहणी इयम् ॥ तृतीयया प्रसर्जनी ॥ ५ ॥ 'वृषा मे रवो' [१७] इत्यनया पृदाकुविषमपनी-
यत इत्यर्थः । प्रसर्जनमात्रं मृदादिविपर्ययेण ॥ चतुर्थ्या दक्षिणम् अपेहि [१८] इति दंशम तृणैः प्रकर्ष्याहिर्मभि-
निरस्यति ॥ ६ ॥ दंशम प्रदक्षिणं तृणैः प्रकर्षेण कर्षयित्वा अहिमभिमुखः प्रक्षिपति तृणानि । 'चक्षुषा' [१९] इ-
२५ त्यनयाभिमन्त्र्य । 'अपेह्यरिः' [१८] इत्यस्य विधिकर्मेदं दक्षिणशब्देन व्यवधानात् । अतश्च प्रत्यृचं कर्मभेदः । इ-

तरथा हि मन्त्रसमुच्चयः स्यात् ॥ यतो दष्टः ॥ ७॥ अह्यभावे यस्माद्देशादिति अहिना दष्टस्तं देशमभि निरस्य-
ति ॥ पञ्चम्या वलीकपललावज्वालेन ॥ ८ ॥ 'कैरात पृश्न'[१] इत्यनया । वलीकानि च पललं च वलीकपललानि । तैरवज्वा-
लो वलीकपललावज्वालः । तेनावसिञ्चति दष्टम् ॥ षष्ठ्याऽऽर्त्नीज्यापाशेन ॥ ९॥ 'असितस्य तैमातस्य'[२] इति षष्ठी ।
अनया । आर्त्न्यां ज्यापाशः । तेनार्तं बध्नाति । तृतीयानिर्देशात् । अवज्वालेनेत्येके प्रकरणात् ॥
५ द्वाभ्यां मधूद्वापान् पाययति ॥ १० ॥ पात्रस्थस्य मधुनो मण्डला-
कारा मधूद्वापाः । तान् पाययति विषरुतम् । 'आलिगी' 'च उरुगूलाया'[३] इत्याभ्याम् ॥ नवम्या श्वावित्पुरीषम् ॥ ११ ॥
पाययतीति शेषः प्रकरणात् । 'कर्णा श्वावित्'[४] इत्यनया श्वावित्पुरीषमभिमन्त्र्य पाययति ॥ त्रिःशल-
ल्या मांसं प्राशयति ॥ १२ ॥ श्वाविच्छलाकया । त्रीणि शललानि यस्याः सा । तया श्वावित्संबन्धं मांसं प्राशय-
ति । न च संपाताः प्रोपसृष्टत्वात् । जातकर्मवत्[५] । त्रिशलल्या जातरूपशकलवत्[५] ॥ दश-
१० म्याऽलाबुनाऽऽचमयति ॥ १३ ॥ 'ताबुवम्'[६] इत्यनया अलाबुन्युदकं कृत्वाभिमन्त्र्याचमयति विषरुप्तम् ॥ ए-
कादश्या नाभिं बध्नाति ॥ १४ ॥ 'तस्तुवम्'[७] इत्यनया अलाबुनाभिं बध्नाति पूर्वस्येवालाबुनः पूर्वकर्मशेषत्वा-
त् ॥ मधुलावृषलिङ्गाभिः खलकुलपर्णीं संक्षुद्य मधुमन्थे पाययति ॥ १५ ॥ 'एका च मे'[८] इति मधुलाशब्दव-
त्यः 'यद्येकवृषोऽसि'[९] इति वृषलिङ्गाः । खलकुलपर्णीं काचमादनीं मधुनाऽऽलोडितेषु सक्तुषु जर्जरीकृत्याऽऽभ्यां सू-
क्ताभ्यामभिमन्त्र्य ॥ उत्तराभिर्भुङ्क्ते ॥ १६ ॥ अन्नं भुङ्क्ते विषरुतः ॥ द्वारं सृजति ॥ १७ ॥ दंश्मनो द्वारं मुखं शस्त्रेण
करोति । विषदू-
१५ षणीभिरुत्तराभिः[१०] ॥ अग्निस्तक्मानम्[११] इति लाजान् पाययति ॥ १८ ॥ लाजा भृष्टा व्रीहयः । तानभिमन्त्र्य पाययति
मण्डं कृत्वा । ज्वरभैषज्यम् ॥ दावे लोहितपात्रेण मूर्ध्नि संपातानानयति ॥ १९ ॥ दवे भवो दावोऽग्निः । तत्र ताम्रस्रुवेण ज्व-
रितस्य मूर्ध्नि संपातानानयति । तन्त्रं 'दावे' इति वचनात् ॥ ओते म[१२] इति करीरमूलं काण्डेनैकदेशम् ॥ २० ॥
करीरमूलं क्रमिणः साधनम् । कथम् । आह । काण्डेन तस्य साधनम् । करीरः कथितो वेदितव्यः । क्रमिहननफल-
सामान्यात् । 'बालान् कल्माषे काण्डे सव्यं परिवेष्ट्य संभिनत्ति । प्रतपति'[१३] । ततोऽनन्तरं समिध आ-
२० दधाति तद्वत् । स्रजवत्[१४] खननं मूलग्रहणात् । एकदेशं करीरैकदेशं काण्डेन समं न स्यात् ॥ ग्रामा-
त् पांसून् ॥ २१ ॥ उत्किरति । आहरति ग्रामात् पांसूनुपमथ्य[१५] । यथान्तरत्वात्[१६] ॥ पश्चादग्नेर्मातुरुपस्थे मुसलबु-
ध्नेन नवनीतान्वक्तेन त्रिः प्रतीहारं तालुनि तापयति ॥ २२ ॥ पश्चादग्नेर्मातुरुपविष्टाया बालमुत्सङ्गे कृत्वा अ-
ग्नौ प्रताप्य मुसलबुध्नेन नवनीतान्वक्तेन प्रतिहृत्य कुमारं क्रमिणं तालुनि तापयति त्रिः । तापने मन्त्रा-
वृत्तिः कर्मभेदात् । अग्निः अत्र वचनात् । न तान्त्रिकस्तन्त्राभावाच्च ॥ शिग्रुभिर्नवनीतमिश्रैः प्रदेग्धि ॥ २३ ॥

शिग्रुफलैर्नवनीतमिश्रितैः प्रकर्षेण लिम्पति 'ओते म'[1] इत्यभिमन्त्र्य सूक्तेन ॥ एकविंशतिमुशीराणि भिन-
द्मि'[2] इति मन्त्रोक्तम् ॥२४॥ जीर्णान्युशीराणि जरद्वचनात्[3]। उशीराणां चूर्णकरणमश्मना।'दहाम्यग्निना मुखम्'[2] इत्यग्नौ
प्रक्षेपः। सूक्तेन ॥ उशीराणि प्रयच्छति ॥ २५॥ जीर्णान्युशीराणि एकविंशतिं क्रमिणे प्रयच्छति ॥
एकविंशत्या सहाप्लावयति ॥ २६ ॥ संपातितेनोदकेन। आप्लावनसाधनत्वात्। क्रमिनाशनम्॥ आ यं विशन्ति[4] इति
५ वयोनिवेशनशृतं क्षीरौदनमश्नाति ॥ २७ ॥ अस्या ऋचः। पक्षिवासकशृतं क्षीरौदनमश्नाति। रक्षोभैषज्यम् ॥
परि द्यामिव[5] इति मधुशीर्षं[6] पाययति ॥२८॥ मण्डकम्। सूक्तस्य कर्म। अभिमन्त्र्य पाययति॥ जपंश्च ॥२९॥ एतत् सूक्तं 'जप-
न्नाचमयत्यभ्युक्षति'[7] चकारात्। विषरुतम् ॥ अस्थिस्रंसम्[8] इति शकलेनाप्स्विटे संपातवताऽवसिञ्च-
ति ॥ ३० ॥ शान्तवृक्षशकलेन। पाणिना संपातवद्वचनात्॥ इति श्रीभट्टदारिलकृतौ कौशिकभाष्ये चतुर्थे-
ऽध्याये पञ्चमी कण्डिका ॥ ५ ॥ ॐ। आबयो[9] इति सार्षपं तैलं संपातवन्तं बध्नाति ॥ १ ॥ सूक्तस्य। सर्षपविकारः
१० सार्षपः। तन्मणिं बध्नाति। सार्षपतैलेनैव संपातवन्तं करोति। संपातवच्च तैलं गुणविधानार्थम्। त-
न्त्रहोमेष्वाज्यमेव। 'दक्षिणत उदपात्र आज्याहुतीनाम्'[10] इत्याज्यग्रहणात्। सार्षप इति तद्धितः। तैल-
स्य बन्धनं मा भूत् ॥ काण्डं प्रलिप्य ॥ २ ॥ सर्षपकाण्डं तैलेनाभ्यज्य। बध्नातीति प्रकरणात्। संपाताः स्यु-
र्बन्ध्यत्वात्[11] ॥ पृक्तं शाकं प्रयच्छति ॥ ३ ॥ सार्षपं शाकं तैलेन मिश्रं प्रयच्छति ॥ चत्वारि शाकफलानि प्रय-
च्छति ॥ ४ ॥ प्रयच्छतिग्रहणं पृक्तानां मा भूत् ॥ क्षीरलेहमाङ्क्ते ॥ ५ ॥ क्षी-
१५ रं लेढीति कर्तरि क्षीरलेहः। तेनाक्षी आङ्क्ते ॥ अश्नाति ॥ ६ ॥ सर्वाण्यक्षिरोगभैषज्यानि लिङ्गयुपतापवचना-
त्[12] पूर्वाणि उद्विजमानस्य[13] आह। किम्। वचनात्॥ अग्नेरिव[14] इत्युक्तं दावे ॥ ७ ॥ 'दावे लोहितपात्रेण मूर्ध्नि संपाताना-
नयति'[15] इत्यस्य भवति। ज्वरभैषज्यम् ॥ इमा यास्तिस्र[16] इति वृक्षभूमौ जातावज्वालेनावसिञ्चति ॥ ८ ॥ वृ-
क्षस्याधः जाताः वृक्षभूमौ जाताः। ताभिरवज्वालिताभिरुदकं तप्तं तेनावसिञ्चति। केशक्षयभैषज्यम् ॥
शीर्षफाण्टाक्षैः ॥ ९ ॥ शीर्षं मदनम्। फाण्टमीषदुष्णमुदकम्। अक्षाः बिभीतकफलानि। एतेऽवज्वालिताः अवनक्षत्रे-
२० ऽवसिञ्चति ॥ निकटाभ्याम् ॥ १० ॥ निकटा च निकटा च निकटे। ताभ्यां निकटाभ्याम्। फाण्टावज्वालेनावनक्षत्रेऽवसि-
ञ्चति ॥ कृष्णं नियानम्[17] इत्योषध्याभिः श्चोतयते ॥११॥ सूक्ताभ्याम्। मन्त्रोक्त्या 'सश्चुषीः'[18] इति लिङ्गयुपतापात्[12]। अभि-
वर्षणेषु[19] ग्रहणान्नेति चेन्न अर्थसूक्तत्वात्। यथा 'अथर्वाणं पितरम्'[20] इति मन्त्रोक्त्या 'अया विष्ठा'[21] इति॥ मा-
रुतानामप्ययः ॥ १२ ॥ मारुतानां मन्त्राणामप्ययः। अस्मिन् कर्मण्यपि तेषां गमनं भवति। षष्ठीनिर्देशात्।
मारुता नाम मन्त्रा इह गच्छन्तीत्यर्थः। 'कर्तृकर्मणोः कृति'[22] इति षष्ठी। अतश्च तेषामपि जलोदरभैषज्यमेत-

त् कर्म । ये पुनरभिवर्षणेषु कर्मसु प्रकृतागमं न व्याचक्षते तेषां तत्र 'सस्रुषीः'[१] 'हिमवतः'[२] इति ग्रहणमनर्थकमनेनैव सिद्धत्वात् । इदं वचनसूत्रं भक्त्या उपवर्णयितव्यं स्यात् ॥ हिमवत[२] इति स्यन्दमानादन्वीपमाहार्य वलीकैः ॥ १३ ॥ प्रैषकृता स्रोतस्यमुदकमाहार्यं गृहच्छादनतृणैर्जलोदरिणमभिश्चोतते ॥ पञ्च च या[३] इति पञ्चपञ्चाशतं परशुपर्णान् काष्ठैरादीपयति ॥ १४ ॥ अनेन सूक्तेन । परशूनां पञ्चाशत् पञ्चाधिका ।
५ पशुकर्णा इव पार्श्वावस्थाः । तेषां पञ्चपञ्चाशतं कपालस्थां कृत्वा काष्ठैरादीपयति सूक्तेन ॥ कपाले प्रशृतं काष्ठेनालिम्पति ॥ १५ ॥ पर्णरसं काष्ठेन गृहीत्वालिम्पत्यवसिञ्चत्यपविध्यति यत्र विपाकं याति । आलेपने च सूक्तम् । तिङभिधानादेवालेपनशेषः । उत्तरस्याप्यधिकारात् ॥ किंस्त्यश्वजाम्बीलोदकरक्षिकामशकादीभ्यां दंशयति ॥ १६ ॥ किंस्त्यः शङ्खः । श्वजाम्बीलः शुनः श्लेष्मा । उदकरक्षिका जलूका । मशकादी गृहकोलिका । किंस्त्येनालेपनं श्वजाम्बीलेन वा । यदा शङ्खेनालेपनं तदा जलूकया दं-
१० शनम् । यदा श्वजाम्बीलेन तदा गृहकोलिकया । आलेपने मन्त्राः दंशने च । समाननिर्देशात् । 'किंस्त्यादीनि'[४] चेति बहुवचनं तद्वदत्र प्रयोगात् । सर्वत्र 'आयोजनानाम्'[५] इति यथा ॥ निशि अव मा पाप्मन्[६] इति तितउनि पूल्यान्यवसिच्यापविध्य ॥ १७ ॥ तितउनि पूल्यानि धारयमाणस्य[७] इदं कर्म भवति । यद्येवमेतद्वचनं किम् । आह । तितउनि पूल्यानां च विधानम् । अपव्यधनमुक्तकर्मयोगात् । निशीति कर्मणः कालः । अवसिच्य व्याधितमसंपातितेनोदकेन निवेश्य ॥ अपरेद्युः सहस्राक्षायाप्सु बलींस्त्रीन् पुरोडाशसंवर्तांश्चतुष्पथेऽवक्षिप्याव-
१५ किरति ॥ १८ ॥ सहस्राक्षायेत्रोभयम् । मन्त्रोऽवकिरणस्य साधनव्यवधानात् । कर्तव्य एव धानादिभिः[८] ॥ चतुर्थेऽध्याये षष्ठी कण्डिका ॥ ६ ॥ यस्ते मद[९] इति शमीलूनपापलक्षणयोः शमीशमकेनाभ्युद्य वापयति ॥ १ ॥ शम्या लूनाः केशा यस्य स शमीलूनः । पापं लक्षणं यस्य स पापलक्षणः । तौ द्वावधि शिरस्तः व्यासवन्तौ । अनयोर्भैषज्यप्रायश्चित्ते । शमी च शमका च शमीशमकमिति द्वन्द्वैकवद्भावः । 'स नपुंसकम्'[१०] इति नपुंसकत्वम् । अत एव समुच्चयः । तेनोदकमिश्रेण शिरोऽभ्युद्य 'दर्भपिञ्जूलीभिर्वलीकैः सार्धमधि शिरोऽवसिञ्चति'[११] । अतः कर्म । नि-
२० र्देशोपपत्तेः । अभ्युद्येति वचनात् । केशच्छेदने मन्त्रस्तिङभिधानात् । प्रायश्चित्तस्य वचनम् । समानकर्मत्वात् ॥ अधिशिरः ॥ २ ॥ 'दर्भपिञ्जूलीभिः... सार्धमधिशिरोऽवसिञ्चति'[११] इत्येतत् कर्म । निर्देशसामान्यादत्र शमीशमकेनेति प्रकृतत्वात् । अतश्च दर्भपिञ्जूलीनिवृत्तिः । अत एव च 'अधिशिरः' इति सूत्रस्य मध्येग्रहणम् ॥ अन्तर्दाव[१२] इति समन्तमग्नेः कर्ष्वामुष्णपूर्णायां जपंस्त्रिः परिक्रम्य पुरोडाशं जुहोति ॥ ३ ॥ अग्नेः सर्वतो गर्तं खात्वा उष्णोदकेन पूरयित्वा जपन्नेतत् सूक्तं त्रिः सर्वतस्तं गर्तं क्रमते । ततस्तस्यामेव पुरोडाशं जुहोति समीप-

निर्देशात्। न तन्त्रम्[१]। प्रत्यृचं होमः[२]। पिशाचनाशनम्॥ प्राग्नये[३] प्रेत[४] इत्युपदधीत ॥४॥ 'प्राग्नये' इति सूक्तं 'प्रेतो यन्तु' इत्युपधानम्। रक्षश्चातनम्॥ वैश्वानरीयाभ्यां पायनानि ॥ ५॥ 'वैश्वानरो न ऊतये'[५] इत्येताभ्यां कर्माणि कर्तव्यानि भैषज्येषु पायनानि विहितानि। सर्वभैषज्यानि चैतानि लिङ्ग्यविशेषात्। वैश्वानर इति पायनानीति सिद्धम् 'अनन्तराणि समानानि युक्तानि'[६] इति योगलाभेन। 'अग्निः परेषु'[७] इत्यस्य वैश्वानरीप्रतिपत्त्यर्थम्॥ अस्थाद् द्यौः[८] इत्यपवातायाः स्वयंस्रस्तेन गोशृ-
५ ङ्गेण संपातवता। प्रथमवत्साऽदितिः[९]। अपवाता गौः वत्सविगलितस्नेहा। स्वयंपतितेन शृङ्गेण संपातसंस्कृतेनाचमयति। 'अलाबुनाचमयति'[१०] इति यथा। विभक्तिसामान्यात्। गोशृङ्गेण श्चोतयति इति केचित्। 'ओषध्याभिः श्चोतयते'[११]। विभक्तिसामान्यात्। जपन् ॥ ६ ॥
जपत्याचमयति। 'तक्षकायाञ्जलिं कृत्वा जपन्नाचमयति'[१२] इत्येकदेशग्रहणात्॥ यां ते रुद्र[१३] इति शूलिने शूलम् ॥७॥ शूलमायुधविशेषः। क्रमभेदेन कर्मविधानं जपतः संबोधनं यथा स्यात्। शूलमस्यास्तीति शूली। तस्मै शूलं ब-
१० ध्नाति। 'प्रमेहणं बध्नाति'[१४] इति यथा। विभक्तिसामान्यात्॥ उत्सूर्यं[१५] इति शमीबिम्बशीर्षपर्ण्याविधि ॥ ८॥ शमीफलं गुरोलकः। शीर्षपर्णिका शीर्षकरीति प्रसिद्धा। आभ्यामभिश्चोतयते। 'ओषध्याभिः श्चोतयते'[११] इति निर्देशसमानार्थत्वात्। पिशाचनाशनम्॥ द्यौश्च म[१६] इत्यभ्यज्यावमार्ष्टि ॥ ९॥ घृतेनाभ्यज्य आ व्याधितप्रदेशान्तमवमार्ष्टि इति भैषज्यम्॥ स्थूणायां निकर्षति ॥ १०॥ अथ च स्थूणया निकर्षति विरिष्टं घृतेनाभ्यक्तम्॥ इदमिद्वा[१७] इत्यक्षतं मूत्रफेनेनाभ्युद्य ॥११॥ इदमिद्वेत्यस्य सूक्तस्य मानुषमूत्रफेनेनारुण्डं क्लेदयति॥ प्रक्षिपति ॥१२॥ ततो मूत्रं प्रक्षि-
१५ पति॥ पाणिना तत्। प्रक्षालयति ॥ १३॥ उदकेन प्रक्षालयति। शौचनिर्वृत्तिः समानार्थत्वात्। प्रक्षालनं केशकर्मप्रत्ययात्॥ दन्तरजसावदेग्धि ॥ १४॥ दन्तमलेनालिम्पत्यक्षतम्। आलेपने मन्त्रस्तिङभिधानात्॥ स्तम्बरजसा ॥ १५॥ अवदेग्धीति प्रकरणात्। गरीस्तम्बलग्नं रजः पांसुरित्यर्थः॥ अपचित[१८] आसुस्रस[१९] इति क्रिस्त्यादीनि ॥ १६॥ लोहितलवणं संक्षुद्याभिनिष्ठीवति ॥ १७॥ सैन्धवलवणं चूर्णीकृत्यापचितिं कृत्वा तामभिमुखे निष्ठीवेत्॥ अन्तरिक्षेण[२०] इति पक्षहतं मन्त्रोक्तं चङ्क्रमया ॥ १८॥ हतः पक्षोऽस्येति पक्षहतः। आहिताग्निपाठात् पूर्वनिपातः[२१]। श्वानस्यार्धे गमनं चङ्क्रमा। त-
२० या निवृत्तया पुण्ययाऽवदेग्धि। अन्ये तु क्रमतेश्च। जिह्वा नामौषधिः लोकप्रसिद्धा। तयाऽभ्यवश्चोतनम् 'ओषध्या'[११] इति श्चोतनसामान्यात् कर्मोक्तम्। 'मूत्रफेनेनाभ्युद्य' इति सर्वकर्मणामतिदेशः। पक्षहतभैषज्यप्रत्ययात् कर्मभेदः॥ कीटेन धूपयति ॥ १९॥ ग्लौः[२२] इत्यक्षतेन ॥ २०॥
व्रीहि स्वाम्[२३] इत्यज्ञातारुः शान्त्युदकेन प्रक्षाल्य मनसा संपातवता ॥ २१॥ अज्ञातकारणमरुः अज्ञातारुः। तच्छान्त्युदकेन प्रक्षालयति। तत्र आज्यं हुत्वा मनसा संकल्पयति। 'संपाता मया कृता' इति चिन्तयति। आज्यतन्त्रे चैतत्कर्म॥ या ओषधय[२४] इति मन्त्रोक्तस्यौषधीभिर्धूपयति ॥ २२॥ मन्त्रे तु सोम उक्तः। तस्य क्षीरि-

ण्य ओषधयः। ताभिर्धूपयति पापगृहीतम्। मधूदश्वित् पाययति ॥ २३ ॥ मधु माक्षिकम्। उदश्वित् तक्रम्। ते उभे पाय-
यति ॥ क्षीरोदश्वित् ॥ २४ ॥ अथवा क्षीरं मथितं च पाययति ॥ उभयं च ॥ २५ ॥ अथ चैतदुभयं पा-
ययति। उभयं मधूदश्वित् क्षीरोदश्विच्च। उभयग्रहणं ज्ञापकमेकवद्भावे साधनसमुच्चयस्य। सकृन्मन्त्रः। अ-
विशेषात् ॥ देवा अदुः[१] इति वल्मीकेन बन्धनशयनाचमनप्रदेहनमुष्णेन ॥ २६ ॥ वल्मीकेन साधयति बन्धना-
५ दीनि। वल्मीकं बध्नाति। वल्मीकं पाययति। वल्मीकमाचमयति। वल्मीकं चोष्णं कृत्वा प्रलिम्पति। विषदूषणा-
नि ॥ यथा मनः [२] अव दिव[३] इत्यरिष्टेन ॥ २७ ॥ अस्य कर्म अरिष्टगृहीतेनोक्तं वेदितव्यं 'सूतिकारिष्टकौ प्रपादयति'[४] इ-
ति। कासभैषज्यम् ॥ देवी देव्यां [५] यां जमदग्निः [६] इति मन्त्रोक्ताफलं जीव्यलाकाभ्याममावास्यायां कृष्णवसनः
कृष्णभक्षः पुरा काकसंपातादवनक्षत्रेऽवसिञ्चति ॥ २८ ॥ केशजननार्थं पूर्वं वृद्धिदंहणार्थमुत्तरमत-
श्च विकल्पः। मन्त्रोक्ता काचमाची। तस्याः फलं जीव्या सह। जीवी जीवन्ती। अलाका भृङ्गकः। अनयोरन्यतर-
१० या सह मन्त्रोक्ताफलमवसिञ्चति। अमावास्यायां काले। प्राक् काकसंपातादपगतनक्षत्रे कालेऽवसिञ्चति।
कृष्णतिलभक्षः कृष्णवर्णवासाश्च। अथ कर्ताऽवसिञ्चति। लिङ्गविशेषात्। केशदोषभैषज्यम् ॥ इति श्री-
भट्टदारिलकृतौ कौशिकभाष्ये चतुर्थेऽध्याये सप्तमी कण्डिका ॥ ७ ॥ ॐ। यस्ते स्तन [७] इति जम्भगृहीताय
स्तनं प्रयच्छति ॥ १ ॥ जम्भो रक्षः। तेन गृहीतः। तस्मै मातुः स्तनं प्रयच्छत्यभिमन्त्र्य 'सर्वाण्यभिमन्त्र्याणि'[८] इति वचनात्।
अर्पणं पानाय लिङ्गात्। ऋचाऽभिमन्त्रणम् ॥ प्रियङ्गुतण्डुलानभ्यवदुग्धान् पाययति ॥ २ ॥ अग्नाविष्णू [९] सो-
१५ मारुद्रा [१०] सिनीवालि [११] वि ते मुञ्चामि [१२] शुम्भनी [१३] इति मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति ॥ ३ ॥ जम्भगृहीतमपत्यम्। तद्धन्म-
न्त्रलिङ्गं 'या नो गयमाविवेश'[१४] इति गयशब्दस्यापत्यनामत्वात्[१५]। संपातवत्त्वमाप्लावनत्वात्[१६] ॥ अवसिञ्चति ॥ ४ ॥ अ-
थ चाऽन्योऽवसिञ्चति ॥ तिरश्चिराजेः[१७] इति मन्त्रोक्तम् ॥ ५ ॥ तत् पाययति यष्टिमधुकं मधूद्वापं निर्देशसामान्यात्[१८] ॥
आकृतिलोष्टवल्मीकौ परिलिख्य ॥ ६ ॥ 'जीवकोषण्यामुत्सीव्य बध्नाति'[१९] इयं क्रिया निर्देशसामान्यात् ॥
पायनानि ॥ ७ ॥ अष्टर्चेन। यानि विषदूषणेषु पायनानि तानि इह भवन्ति। 'हरिद्रां सर्पिषि पाययति'[२०] इत्येतानि पायनानि ॥
२० अपचिताम्[२१] इति वैणवेन दार्भ्यूषेण कृष्णोर्णाज्येन कालबुन्दैः स्तुकाग्रैः इति मन्त्रोक्तम् ॥ ८ ॥ धनुषा दार्भ्यूषेण। दर्भ-
विकारा दार्भी रज्जुः। तया भूषा यस्य तत् दार्भीभूषं दार्भ्यूषमित्यर्थः। नाऽऽलेपनम्। गात्रवर्णरूपलाघवप्रदेशेषु
वेधनं भूषणम्। कृष्णोर्णा ज्या यस्य तत्। कृष्णोर्णासनाथमित्यर्थः। तेन धनुषा। कालबुन्दा इषवः तैः
कृष्णवर्णैः। स्तुकाग्रैः ऊर्णास्तुकाग्रैः। स्तुका जटोच्यते। तैर्मन्त्रोक्तं विध्यति अपचितमित्यर्थः। वेधनं
च मन्त्रोक्तमेव।

......

'विध्यामि'[१] इति सूक्तस्य नानालिङ्गत्वात्। ईर्ष्याकृतिलोष्टलिङ्गानामपोद्धारः। प्रत्यृचं वेधः। वेधनमधिष्ठानं भवति। कृष्णोर्णाप्रकरणात्। ततो विध्यति मन्त्रोक्तम्॥ चतुर्थ्याभिनिधायाभिविध्यति ॥ ९ ॥ चतुर्णां पूरणी चतुर्थी[२]। अभिनिधानमन्त्रकमङ्गत्वात्॥

ज्यास्तुकावज्वालेन ॥१०॥ ज्यायाः स्तुकयाऽवज्वालः स ज्यास्तुकावज्वालः। तेनावसिञ्चति। निर्देशसामान्यात्[३]

५ अपचितमवसिञ्चति ॥ यः कीकसा[४] इति पिशीलवीणातन्त्रीं बध्नाति ॥ ११ ॥ पिशीलवीणा। तस्यास्तन्त्रीं बध्नाति। अक्षतभैषज्यम्॥ तन्त्र्या क्षितिकाम् ॥१२॥ तस्या वीणायाः क्षितिका। तयैव तन्त्र्या बध्नाति। क्षितिका करभस्योपरि तृणखण्डः स्वरोत्पादनार्थः॥ वीरिणवध्रं स्वयंम्लानं त्रिः समस्य ॥१३॥ वीरिणसंस्कृतः। तस्य वध्रः इषीकान्तः। स्वयंशुष्कं त्रिगुणं कृत्वा बध्नाति। अक्षतभैषज्यम्॥ अप्सु त[५] इति वहन्त्योर्मध्ये विमिते पिञ्जूलीभिराप्लावयति ॥ १४॥ वहन्त्योर्नद्योर्मध्ये गृहं कृत्वा तत्र संपातिताभिरद्भिराप्लावयति वरुणगृहीतं चतुर्ऋचेन॥

१० अवसिञ्चति ॥१५॥ अथ चावसिञ्चति वरुणगृहीतम्॥ उष्णाः संपातवतीरसंपाताः ॥ १६॥ यासामपां संपातास्ता उष्णाः कर्तव्याः। असंपाता इतराः। यासां न संपातास्ताः शीताः। ताभिरद्भिरवसेचनं शीताभिरसंपातत्वात्॥ नमो रूराय[६] इति शकुनीनिवेषीकाञ्जिमण्डूकं नीललोहिताभ्यां सूत्राभ्यां सकक्षं बद्ध्वा ॥ १७॥ शकुनीनिव करोति। 'मन्त्रोक्तानधस्तल्पे हरितसूत्रेण सव्यजङ्घासु बद्ध्वा'[७] इत्यादिवत्। इषीकाञ्जिमण्डूकं करोति। इषीकेव अञ्जिः रेखा यस्य स इषीकाञ्जिः। तं नीलसूत्रेण लोहितेन च सूत्रेण सह कक्षाभ्यां बद्ध्वा शकुनीनिव करोति।

१५ ज्वरभैषज्यम्॥ शीर्षक्तिम्[८] इत्यभिमृशति ॥ १८॥ यथारोगमभिमर्शनं लिङ्ग्युपतापवचनात्[९]। अतो व्यवस्था मन्त्राणाम्॥ उत्तमाभ्यामादित्यमुपतिष्ठते ॥ १९॥ अस्य सूक्तस्योत्तमाभ्यामृग्भ्यामादित्यमुपतिष्ठते। 'पादाभ्यां त'[१०] इत्याभ्याम्। व्याध्युपशमे मन्त्राः॥ इन्द्रस्य प्रथम[११] इति तक्षकायेत्युक्तम् ॥२०॥ 'इन्द्रस्य प्रथम' इत्यस्य सूक्तस्य कर्मातिदेशः। 'तक्षकायाञ्जलिं कृत्वा'[१२] 'जपन्'[१३] इत्यादीनि सूक्तकर्माणि भवन्ति। अथ तत्रैव किं नोक्तं 'ब्राह्मणो जज्ञ[१४] इन्द्रस्य प्रथम[११] इति तक्षकायाञ्जलिम्' इति। किं नोक्तम्। उच्यते। अस्य सूक्तस्योत्तरकर्मसंबन्धो यथा

२० स्यात्॥ पैद्वस्य प्रकर्ष्य दक्षिणेनाङ्गुष्ठेन दक्षिणस्यां नस्तः ॥ २१॥ पैद्वः मञ्जूषायामधः कच्छपाकारः। अहिदष्टस्य प्रकर्ष्य दक्षिणे नासापुटे श्चोतयते। दक्षिणहस्ताङ्गुष्ठेन प्रकर्ष्यं नस्यं दद्यात्॥ अहिभये सिच्यवगूहयति ॥ २२॥ सर्पाद् भये पैद्वं वस्त्रे बद्ध्वा स्थापयति तस्मिन् वेश्मनि॥ अङ्गादङ्गात्[१५] इत्या प्रपदात्॥ २३॥ 'अङ्गादङ्गात् प्रच्यावय'[१५] इत्येकया सर्पदष्टमा प्रपदाभ्यां प्रकर्षेण मार्ष्टि। कुतो मार्जनसंप्रत्ययः। उच्यते। 'स्त्रीव्याधितावाप्लुतावसिक्तौ'[१६] इति ग्रन्थसामान्यात्। अनयैव परिभाषया प्राप्तत्वादनभिधेयमिति चेन्न। अत्र प्रधा-

नकर्मत्वात्॥७॥ दक्षोनमृपामिताप्याहि मृमिभिरस्मनिग्र हस्तंडलूके नक्तं हवा अहिममिसवंशि पालक्षू
कं॥ आरेसमूर्ध्दत्युनयाः नवसनस्रथानाभिधानात्॥७॥ चनोद्दष्टः॥ सप्तदशोनोयनस्तद्दशोदष्टंसममभिनिरस्ये
ति उक्तं॥७॥ ओषधिवनस्पतीनाममनुक्तान्यप्रतिषिद्धानि भैषज्यानि॥ यथोनावनस्पतीनावचेष्टो
पतिविध्यानि व्याधिनिदानसंबंधकानि भैषज्यमंत्रैरनुक्तानां नहि हीन एवानुयोगः प्रतिषिद्धवचनात्॥
नवभावयथार्थपानानुलेपनस्नानधूपभोजनानि॥ सामर्थ्यापेक्षत्वात्॥ उपमागस्य भैषज्यमंत्राभैषज्य
कर्मत्वात्॥७॥ क्रियार्थाः॥ स्तुवचनेकार्यमंत्रोपाध्यायवत्तप्रामाणः पादः पठति॥ भैषज्यानामित्या
व्याधाः॥ कर्महेतुत्वात्॥ यावन्नामक कर्मयोगत्वामनुवचने निर्देशसामान्यात्॥७ आहोलिंगाभिः॥
पनुक्तान्यप्रतिषिद्धानीतिप्रकृतत्वात्॥ पूर्वसूत्रेणैवंद्दष्टसिद्धं॥ किमर्थमारंभः॥ अविभक्तिशेषस्योप
मुच्चयार्थत्वात्॥ सामान्यवचनेवसमुच्चये॥ अंहस इत्येवंलिंगात्॥ ताभिः समस्ताभिरनुक्ताभि आयुर्वे
दप्रोक्तानि द्रव्याणां व्याधिहेतुविनाशकानि न हि हि न कर्मसंविधिविनियोज्यानि सर्वभैषज्यानि॥७
अंहोलिंगाभिः॥ सर्वेषां तु भैषज्यं लिंगस्तुपनापकवचनात्॥७॥ भैषज्यं संहिताविधिः॥७॥ भैषज्य
संहितायां क्षुविधिकृतः॥ कर्माश्रयत्वात्॥ स्त्रीकर्मसंहितायास्तु कथ्यते॥ संहितावचनात्॥७॥
स्त्रेभ्यस्तत्रकामवतीकर्याः स्त्रीद्वंसंज्ञानां अधिशिरोवभिवचति॥ सर्वस्यात्मनीकामरत्वात्॥ पुत्रकामा
याप्रतापत्याया अग्नयः उक्तोनोनि मंत्रालिंगाः दिवसयोगः॥ उदकसमीपज्ञानां ओषधीरूपरिशिरसोव
सिंचति॥ स्त्रीकर्माणि परिसमाप्तानि॥७॥ पावजिताये पुरोडाशप्रमद्दालंकारानुसंपालवव॥ प्रपठ
ति॥ गृहाणित्यागनाये पुरोडाशांगेदुकंपलंका ( ) व्रसंपानुवन्तः कृत्वा प्रपठति॥ मक्ष्याक्षेउतनभू
षणार्थप्रतिसंपानं सूक्तेनेति॥ इत्यभेसनु॥७॥ इति श्रीभट्टदारिलकृतौ कौशिकभाष्ये चतुर्थे ध्याये अष्ट
मी कंडिका॥ ८॥ ४॥ वृषदूनेसुषुनितिन तु स्तुदपाने प्रनंगं पश्चादुद्गमचो गावोपसादने॥ प्रथमाः॥
प्रस्तुवतुनमासिक्तभिः॥ समानोदकत्वात्॥७॥ अनुरोमृजामृद्धिविचृत्तति प्रावः॥ सूक्तेनाभिमंत्र्य
मुद्रामुंजानगर्भिण्याः शिरसि उक्तनानुकरोति॥ भागयात्॥७॥ प्रतीचीरितिषीकाः॥ इषीकाः कथिनाप
लम्याः शिरसि विचृतति॥ उभयोः सकृत्सूक्ते॥७॥ वध्यमानास्तु संज्ञायुः॥ इषीकास्तु विभज्यमानास्व
मरणसंज्ञायः॥७॥ उत्सेनाम्लावयति दक्षिणात्केशास्तु कान्॥ संपातिनानोत्स्नेनाम्लावयति॥ दक्षिणा
नुकेशामुंजादारभ्य गर्भकेसनफलो॥७ शालातूर्यथानुविचृतति॥ सूतीकाः शृहवंधात्मिनानिस्कांते
॥७॥ उभयतः पाशायोक्तमावध्नाति॥ शाकटयोक्तमुभयतः प्रबध्नानि नसंपाता॥ उपमृष्ट्वा दर्ग

नकर्मत्वात् ॥ दंशमोत्तमयाऽभिताप्याहिमभि निरस्यति ॥ २४ ॥ दंश्म उल्मुकेन निष्टप्य अहिमभिमुखं क्षिपति उल्मु-
कम् । 'आरे अभूत्'[१] इत्यनया निरसनं प्रधानाभिधानात् ॥ यतो दष्टः ॥ २५ ॥ सर्पादर्शने यत उद्देशे दष्टस्तमभि निरस्य-
ति उल्मुकम् ॥ ओषधिवनस्पतीनामनूक्तान्यप्रतिषिद्धानि भैषज्यानाम् ॥ २६ ॥ ओषधीनां वनस्पतीनां च वैद्यकेऽ-
प्रतिषिद्धानि व्याधिनिदानसंबन्धकानि भैषज्यमन्त्रैरनूक्तानां तद्विहित एव विनियोगोऽप्रतिषिद्धवचनात् ।
५ तस्माद्यथार्थं पायनानुलेपनस्नानधूपभोजनानि । सामर्थ्यापेक्षत्वात् उपभोगस्य । भैषज्यमन्त्रा भैषज्य-
कर्मत्वात् । 'क्रियाभिरनुवचनं कार्यम्' अत्रोपाध्यायवत्सशर्मपादाः पठन्ति । भैषज्यानामित्य-
प्ययः । कर्महेतुत्वात् । यावतामेककर्मयोगस्तावतामनुवचनं निर्देशसामान्यात् ॥ अंहोलिङ्गाभिः[२] ॥ २७ ॥
'अनूक्तान्यप्रतिषिद्धानि' इति प्रकृतत्वात् पूर्वसूत्रेणैवेदं सिद्धम् । किमर्थं आरम्भः । अविभक्तिशेषस्यास-
मुच्चयार्थत्वात् । सामान्यत ऋचां समुच्चयः । 'अंहस' इत्येवंलिङ्गात् । ताभिः समस्ताभिरनूक्ताभिः आयुर्वे-
१० दपठितानि द्रव्याणि व्याधिहेतुविनाशकानि तद्विहितकर्मस्वेव विनियोज्यानि सर्वभैषज्यानि ।
सर्वेषां तु भैषज्यं लिङ्ग्युपतापवचनात्[३] । भैषज्यं संहिताविधिः । 'भैषज्य-
संहितायास्तु विधिरुक्तः क्रमाश्रयात् ॥ स्त्रीकर्मसंहितायास्तु कथ्यते संहितावशात्' ।
पूर्वस्य पुत्रकामावतोकयोरुदकान्ते शान्ता अधिशिरोऽवसिञ्चति ॥ २८ ॥ पूर्वस्येति प्रतीकान्तरत्वात् । पुत्रकामा-
या मृतापत्यायाश्च 'यः कृणोति'[४] इति मन्त्रलिङ्गादेव प्रयोगः । उदकसमीपे शान्ता ओषधीरुपरि शिरसोऽव-
१५ सिञ्चति । स्त्रीकर्माणि परिसमाप्तानि ॥ आव्रजितायै पुरोडाशप्रमन्दालंकारान् संपातवतः प्रयच्छ-
ति ॥ २९ ॥ गृहाणि प्रत्यागतायै पुरोडाशं गेन्दुकमलंकारांश्च संपातवतः कृत्वा प्रयच्छति भक्षणाऽऽक्रीडनभू-
षणार्थम् । प्रतिसंपातं सूक्तावृत्तिः । द्रव्यभेदात् ॥ इति श्रीभट्टदारिलकृतौ कौशिकभाष्ये चतुर्थेऽध्याये अष्ट-
मी कण्डिका ॥ ८ ॥ ॐ । वषट् ते पूषन्[५] इति चतुर उदपात्रे संपातानानीय । अतश्च पश्चादुदपात्रोपसादनम्[६] । प्रथमाः
प्रत्यृचमुत्तमस्तिसृभिः । समानोदर्कत्वात्[७] । चतुरो मुञ्जान् मूर्ध्नि विवृहति प्राचः ॥ १ ॥ सूक्तेनाभिमन्त्र्य च-
२० तुरो मुञ्जान् गर्भिण्याः शिरसि उच्छ्रितान् करोति प्रागग्रान् ॥ प्रतीचीरिषीकाः ॥ २ ॥ इषीकाः कथिताः । ताः प्र-
त्यगग्राः शिरसि विवृहति । उभयोः सकृत् सूक्तम् ॥ छिद्यमानासु संशयः ॥ ३ ॥ इषीकासु विभज्यमानासु
मरणसंशयः ॥ उष्णेनाप्लावयति दक्षिणात् केशस्तुकात् ॥ ४ ॥ संपातितेनोष्णेनाप्लावयति । दक्षिणा-
त् केशपुञ्जादारभ्य । गर्भस्रंसनफलम् ॥ शालाग्रन्थीन् विचृतति ॥ ५ ॥ सूतिकागृहबन्धांश्छिनत्ति सूक्तान्ते ॥
उभयतःपाशं योक्त्रमाबध्नाति ॥ ६ ॥ शकटयोक्त्रमुभयतःपाशमाबध्नाति । न संपाताः 'आ' उपसृष्टत्वात् । ग-

**भिण्याः गर्भस्रंसनानि** ॥ यदि सोमस्यासि राज्ञः सोमात् त्वा राज्ञोऽधिक्रीणामि । यदि वरुणस्यासि राज्ञो वरुणात् त्वा राज्ञोऽधिक्रीणामीत्येकविंशत्या यवैः स्रजं परिकिरति ॥ ७ ॥ **स्रजस्त्वाराळिकेति प्रसिद्धा । तामटव्यां जातामेकविंशतिपरिमितैर्यवैः सर्वतः किरति । मन्त्रयोः समुच्चयो यदीति संदेहोऽभिधानात्** ॥ अन्या वो अन्यामवत्वन्यान्यस्या उपावत । सध्रीचीः सव्रता भूत्वा अस्या अवत वीर्यम्[१] इति संनयति ॥ ८ ॥ **एकीकरणं संनयनम् । विस्तृतायाः संहरणमित्यर्थः** ॥ मा ते रिषत् खनिता यस्मै च त्वा खनामसि । द्विपाच्चतुष्पादस्माकं मारिषद्देव्योषधे[२] । स्रजो नामासि प्रजापतिष्ट्वामखनदात्मने शल्यस्रंसनम् । तां त्वा वयं खनामस्यमुष्मै त्वा शल्यस्रंसनम् इत्यस्तमिते छत्रेण चान्तर्धाय फालेन खनति ॥ ९ ॥ **आभ्यामृग्भ्यां फालेन खनति स्रजमूलमस्तमिते भगवति सवितरि । अथान्यः ततो भगवन्तमादित्यं छत्रेणान्तर्हितं कृत्वा पूर्ववत् खनति । फालः कुश्यादि आयसं[३] द्रव्यम्** ॥ अत्र तव राध्यताम् इत्यग्रमवदधाति ॥ १० ॥ इह मम इति मूलमुपयच्छति ॥ ११ ॥ **संनिधानात् साकाङ्क्षत्वाच्च अनेन स्रजमूलं गृह्णाति** ॥ एकसरेऽनुपलीढे कुमारः ॥ १२ ॥ **एकतन्तुमूले स्रजे । अनुपलीढे अच्छिन्ने इत्यर्थः । गर्भिण्या उदरे दारक इति ज्ञेयम्** ॥ दर्भेण परिवेष्ट्य केशेषूपचृतति ॥ १३ ॥ **तत्स्रजमूलं दर्भेण संवेष्टयित्वा गर्भिण्याः केशेषु बध्नाति सूक्तेन अन्यत्र कल्पविधानात्** ॥ एवं वृषाशाकवृषे ॥ १४ ॥ **अनेन विधिना एव मूलं खनेत् । शाकवृषा वासका । वृषा रिङ्गणिका । काकजङ्घा चेति केचित् । गर्भस्रंसने एष मूलविकल्पः** ॥ अवपन्ने जरायुण्युपोद्धरन्ति ॥ १५ ॥ **जरायुण्यवपतिते विपन्नं च मूलं केशेभ्यः** ॥ स्रजेनौषधिखननं व्याख्यातम् ॥ १६ ॥ **अनेन स्रजखननविधिना ओषधिमूलानां खननविधिः कथितः प्रत्येतव्यः । यत्र मूलग्रहणं मूले तत्र एतत्खननं प्रत्येतव्यम् । पाटामूलम्[४] इत्याद्युदाहरणम् । यद्येवं 'सौवर्चलमोषधिवत्'[५] इत्यनर्थकम् । उच्यते । ओषधिवदिति प्रधानातिदेशः खननस्यार्थवचनात् । अतो 'दर्भेण परिवेष्ट्य केशेषूपचृतति'[६] एतदपि भवति** ॥ चत्वार्युमाफलानि पाणावद्भिरभिश्चोतयते ॥ १७ ॥ संवर्तमानेषु कुमारः ॥ १८ ॥ **उमा अतसी । तस्याश्चत्वारि फलानि बीजवन्ति गर्भिण्या हस्ते कृत्वोदकेन । अभिश्चोतने मन्त्रः । संवर्तमानेषु पुञ्जीभवति गर्भे कुमार इति विज्ञेयम्** ॥ ब्राह्मणायनोऽङ्गान्यभिमृशति ॥ १९ ॥ पुन्नामधेये कुमारः ॥ २० ॥ **यो ब्राह्मणो जीवत्पितृकः[७] जीवत्स्थविरभ्रातृकोऽन्यस्मिन् वा स्थविरतरे जीवति स ब्राह्मणायनः । सूक्तेनाभिमन्त्र्य गर्भिण्यङ्गानि स्पृशति । स यदि पुन्नामानि पादौ पाणी वा ओष्ठौ हनू वा बाहू कर्णौ वा स्पृशेत् गर्भे कुमार इति विज्ञेयम् । अनयोश्च विज्ञानयोः प्रसवकाले एव प्रयोगः । न च विज्ञानमात्रेण एते । किं तर्हि । उदयार्थं च प्रस-**

त्वनसंबंधात्॥ गर्भस्रंसने विज्ञाने च॥ इति श्रीभट्टहरिहरकृतौ कौशिकभाष्ये चतुर्थेऽध्याये नवमी कण्डि
का॥ ७॥ इदं तु नासदस्यस्येत्याश्वलायनस्यासूत्रकाले तत्र आवा अग्निशिरो नासिंचति॥ नध्यायाद्यारंभे कर्मणि
प्रसवापाश्विशापाश्वास्वा जनीयादकसमीयेशारवोकृत्वानासुवं आसुपवेश्यनस्याः शिरसि चत्वारो
पयोः कृत्वा अभिमंत्र्यादकमवसिंचति॥ ७॥ आत्रजिनायि॥ आह आग्रजिनायादत्यवयवग्रहणात्॥
पुरोडाशाग्रमंडलकारात्॥ संपातवतः प्रयच्छति निभवति॥ ७॥ निःशाखामित्यवनाकायेकृत्स्नवसे
नार्येत्रिषु निमितेषु आकृद्धाः प्रसदद्वारेषु कुसंपातानानयति॥ अवसनापत्नाइदं कर्म कृत्स्नवृक्ष
परिहितायानोनरोर्यनि भायकृत्स्नामित्येकवचनात्॥ तत्र शिगृहाणि करोति॥ पूर्वद्वाराणि
यामापश्चाद्द्वाराणि तान्येवं तेषु वेश्मसु अष्टसंपातानानयति॥ प्रथमं पश्चिमे गृहे संपातानन्तं॥ न
नुचकंडिकाद्य एवमुक्ते वनोकाग्रहणं युक्तमर्थविशेषात्॥ ३ अनेन प्रसवनात्॥ अप्सास्तोकानोकाम
मपगमाऽवनोकानाम॥ ७॥ पलाशो सिसेधूनरात्॥ पलाशविकारः पलाशं तत्र सीमानि कृतोन
रसं गतानानयति॥ अवनोकयासीसान्यधिष्ठाप्याप्सवयति कर्मपूजित सिन्नेवमेवचेश्मनिश्च
पश्चिना माझावयति॥ ७॥ निधायकृत्स्नं व्रजति॥ नक्षिप्राप्यवनप्रहयत्यारहतकृत्स्नं वस्त्रेन
मवनिनतोन्योरिधायपूर्वेण द्वारेण निःक्रामति॥ [illegible] ७॥ आरोप्य प्रसो॥ नद्दह मा
दृष्यामि नातेन्नैव पूर्वद्वारेण निःक्रामयति॥ ७॥ एवं पूर्वयोः पृथक् संभाये यथा पश्चिमे कर्मेदृतमेव पू
र्वयोर्गृहयोः कर्मणी स्यातां समारस्तन्येद्दपात्रादपः॥ मंत्रो भेदश्च कर्मभेदात्॥ पृथक् समाप्यति॥ प्रथमप्रो
क्रमणः समरणात्॥ समभ्यासं हि सत्यां तत्र काल एवं समारसमरणं स्यात्॥ ७॥ शारवासूत्रे॥ अस्य सूत्र
स्याश्विशापाशासासूत्रकात्रत्येन तु कर्मसबाविश॥ ७॥ पश्चादग्नेरभितः काष्ठौ इषीके धाया यथा यूपि धीयि
ने औदुंबरी पाययति॥ समिद्याधानो गः पश्चादग्नेस्तदाशारेण भीकतो हत्यानोरणाकारे धायतः धारय
ति॥ तोरणं तस्योपरि अपरिसमीपेन औदुंबरीः समिध आधापयति॥ कर्तृमंत्रे अवधान्यवनोकाभि
तउभयतोनिरवनेन॥ अभितदृति ग्रहणं मूलसंयोगात्॥ ७॥ उतमाग्नजिनायेपुरोडाश मंडलकारात्संपा
तवतः प्रयच्छतीत्येतदत्रसवति॥ उक्तग्रहणमनर्थकं अवयवग्रहणादेवासिध्यत्वात्॥ अपर्वे सूक्तकर्मणां
सर्वेषामर्थ्येपार्थत्वात्॥ इतरथाहि अनुरागत्वं स्यात्॥ ७॥ पतिवेदनानि॥ वक्ष्यामहे इति वाक्यविशेषः॥
पतिलाभफलानि कर्माणि पतिवेदनानि॥ कर्माधिकारवदेनेडकभेषज्यवत्॥ ७॥ भगो अमदस्याग
मकूशरमाशयति॥ कृशरआदनः पुल्लिंगत्वात्॥ तिलतंडुलोदकेभुविः सकार्यं कुमारीमाशयति॥

**वसंबन्धात् । गर्भस्रंसने विज्ञाने च ॥ इति श्रीभट्टदारिलकृतौ कौशिकभाष्ये चतुर्थेऽध्याये नवमी कण्डिका ॥** इदं जनास[1] इत्यस्मै शिंशपाशाखासूदकान्ते शान्ता अधिशिरोऽत्र सिञ्चति ॥ १ ॥ **वन्ध्याया इदं कर्म प्रसवाय । शिंशपाशाखा आनीयोदकसमीपे शाखाः कृत्वा तासु वन्ध्यामुपवेश्य तस्याः शिरसि चित्याद्योषधीः[2] कृत्वा अभिमन्त्र्योदकमवसिञ्चति ।** आव्रजितायै ॥ २ ॥ **आह आव्रजितायै इति । अवयवग्रहणात्**
५ **'पुरोडाशप्रमन्दालंकारान् संपातवतः प्रयच्छति'[3] इति भवति ॥** निःसालाम्[4] इत्यवतोकायै कृष्णवसनायै त्रिषु विमितेषु प्राग्द्वारप्रत्यग्द्वारेष्वप्सु संपातानानयति ॥ ३ ॥ **अवतोकाया मृतापत्याया इदं कर्म । कृष्णं वस्त्रं परिहितं यया । नोत्तरीयं 'निधाय कृष्णम्' इत्येकवचनात् । ततस्त्रीणि गृहाणि करोति । पूर्वद्वाराणि त्रीण्यपि पश्चाद्द्वाराणि तान्येव । तेषु वेश्मसु । अप्सु संपातानानयति । प्रथमं पश्चिमे गृहे संपाततन्त्रम् । ननु च कण्डिकाया आद्य एव सूत्रेऽवतोकाग्रहणं युक्तमर्थाविशेषात् । उच्यते । प्रसवनादस्याः । तोकाना-**
१० **मपगमादवतोका नाम ॥** पालाशे सीसेषूत्तरान् ॥ ४ ॥ **पलाशविकारः पालाशः । तत्र सीसानि कृत्वोत्तरसंपातानानयति ॥** सीसान्यधिष्ठाप्याप्लावयति ॥ ५ ॥ **अवतोकया क्रमयति । तस्मिन्नेव वेश्मनि अवस्थितामाप्लावयति ॥** निधाय कृष्णं व्रजति ॥ ६ ॥ **तस्मिन्नाप्लावनगृहे यत् परिहितं कृष्णं वस्त्रं तन्मुञ्चति । ततोऽन्यत् परिधाय पूर्वेण द्वारेण निष्क्रामति ॥** आदीप्य ब्रह्मा ॥ ७ ॥ **तद्गृहमादीप्याग्निना तेनैव पूर्वद्वारेण निष्क्रामति ॥** एवं पूर्वयोः पृथक्संभार्ये ॥ ८ ॥ **यथा पश्चिमे कर्म कृतमेवं पू-**
१५ **र्वयोर्गृहयोः कर्मणी स्याताम् । संभारास्त्वन्ये उदपात्रादयः । मन्त्रभेदश्च कर्मभेदात् । पृथक्संभार्ये इति प्रथमं प्राक्कर्मणः संभरणम् । सतस्यां हि असत्यां तन्त्रकाले एव संभारसंभरणं स्यात् ॥** शाखासूक्तम् ॥ ९ ॥ **अस्य सूक्तस्य 'शिंशपाशाखासूदकान्ते'[5] इत्येतत् कर्म भवति ॥** पश्चादग्नेरभितःकाण्डे इषीके निधायाध्यधि धायिने औदुम्बरीराधापयति ॥१०॥ **प्राक्समिदाधानात् पश्चादग्नेः त्सरुशरेणैषीके निहत्य तोरणाकारे धायिने धारयति तोरणम् । तस्योपर्युपरि[6] समीपेन । औदुम्बरीः समिध आधापयति । कर्तुर्मन्त्रः । आधाप्यावतोकामभि-**
२० **त उभयतो निखनेत् । अभित इति ग्रहणं मूलसंयोगात् ॥** उक्तमाव्रजितायै ॥११॥ **'पुरोडाशप्रमन्दालंकारान् संपातवतः प्रयच्छति'[7] इत्येतदत्र भवति । उक्तग्रहणमनर्थकमवयवग्रहणादेव सिद्धत्वात् । अथर्वसूक्तकर्मणां सर्वेषां सामर्थ्यमर्थवत्त्वात् । इतरथा हि अन्तरङ्गत्वं स्यात् ॥** पतिवेदनानि ॥ १२ ॥ **वक्ष्याम इति वाक्यशेषः । पतिलाभफलानि कर्माणि पतिवेदनानि । कर्माधिकारवचनमुक्तं भैषज्यवत्[8] ॥** आ नो अग्ने[9] इत्यागमकृशरमाशयति ॥ १३ ॥ **कृशर ओदनः पुँल्लिङ्गत्वात् । तिलतण्डुलोदकैर्मन्त्रैः संस्कृतं कुमारीमाशयति प-**

तिलाभकामाम् ॥ मृगाखरादेद्यां मन्त्रोक्तानि संपातवन्ति द्वारे प्रयच्छति ॥ १४ ॥ मृगैर्नित्यं सेवितो देशो मृगाखरः। ततो
मृदं गृहीत्वा वेदिं कुर्यात्। तस्यां संपातितां कृत्वा कुमार्यै प्रयच्छति। किम्। उच्यते। मन्त्रोक्तानि। आखर 'इदं हिरण्यं गु-
ल्गुल्वयमौक्षः'[१]। औक्षः गन्धोदकमित्यर्थः ॥ उदकंसे व्रीहियवौ जाम्यै निशि हुत्वा दक्षिणेन प्रक्रामयति ॥ १५ ॥ जामिः सभ्रातृ-
का। तस्यै एतत्कर्म करोति भ्राता। निशि रात्रौ उदकपूर्णे घटे व्रीहीन् यवांश्च जुहोति प्रत्यृचम्। ततस्तस्य घ-
५ टस्य दक्षिणेन प्रक्रामयति भगिनीं भ्राता। प्रक्रामणे मन्त्रः शेषत्वात् ॥ पश्चादग्नेः प्रक्षाल्य संधा-
व्य संपातवतीं भगस्य नावम्[२] इति मन्त्रोक्तम् ॥ १६ ॥ तन्त्राग्नेः पश्चान्नावं प्रक्षाल्य संधाव्य मार्जयित्वा। तामेव संपातव-
तीं करोति नावमिति मन्त्रोक्तवचनात्। मन्त्रोक्तं कर्म करोति। किं च तत्। पतिकामाया आरोहणं सू-
क्तस्य कर्म। 'भगस्य नावम्'[२] इति क्रियाविधानार्थत्वात् ॥ सप्तदाम्न्यां संपातवत्यां वत्सान् प्रत्यन्तान् प्रचृतन्तो व-
हन्ति ॥ १७ ॥ सप्त दामानि यस्या वत्सवत्याः सा सप्तदाम्नी। तस्याः सप्तदाम्न्याः संपातसंस्कृतायाः सप्त वत्सान् पूर्वं
१० प्रमुञ्चन्ति। कुमार्या अन्तमन्तं प्रति प्रत्यन्तः वत्सः। आद्यादारभ्य यो योऽन्त्यस्तं तं मुञ्चन्तीति। घोषकलनां
कर्मणः सूचयति। 'दामहायनान्ताच्च'[३] इति ङीप् ॥ अहतेन संपातवता ऋषभमभ्यस्यति ॥ १८ ॥ नवेन वाससा
संपातवता। यः सेक्ता गोः स ऋषभः ॥ तस्यां दिशि जानीयात् कस्य विशेषोऽयम्। आह। उददंयति
यां दिशम् ॥ १९ ॥ इति प्रकृतस्यैव कर्मणोऽस्य विधानात् ॥ जाम्यै प्र यदेत[४] इत्यागमकृशरम् ॥ २० ॥ जामिः कथिता। तस्या एवै-
तत्कर्म। अनयर्चा आगमकृशरमाशयति। चोदनासामान्यात्। जामिग्रहणमुदकंसकर्मणः एव। एकपि-
१५ तृकेणेदं कर्म कर्तव्यम् ॥ इमा ब्रह्म[५] इति स्वस्ते ॥ २१ ॥ अयमा याति[६] इति पुरा काकसंपातात्। यावन्न काकाः आकाशे
कुलायेभ्य उत्तिष्ठन्ति तस्मिन् काले। उषःकाले इत्यर्थः। अर्यम्णे जुहोति ॥ २२ ॥ आज्यम्। अर्यम्ण इति किम् ॥ अन्तःस्रक्तिषु बलीन्
हरति ॥ २३ ॥ अ-
र्यम्णे सूक्तान्ते बलिप्रक्षेपः। 'अर्यम्णे बलिः' इति कल्पः ॥ आपतन्ति यतः ॥ २४ ॥ काका आगच्छन्ति तस्या
दिशो वरागमनं विज्ञेयम्। विज्ञानप्रयोजनं किम्। तत आगताय दाने कन्यायाः प्रतिष्ठेति विज्ञेयम्। अन्यत आ-
गताय न देयेत्यर्थः। इमानि पतिवेदनानि समाप्तानि ॥ इति श्रीभट्टदारिलकृतौ कौशि-
२० कभाष्ये चतुर्थेऽध्याये दशमी कण्डिका ॥ १० ॥ ॐ। पुंसवनानि ॥ १ ॥ वक्ष्याम इति वाक्यशेषः। पुंसव-
नग्रहणं गर्भसंस्कारप्रत्ययार्थम्। कर्माधिकार उक्तं प्रयोजनम् ॥ रजउद्वासायाः पुंनक्षत्रे ॥ २ ॥ येन वेहत्[७] इति बा-
णं मूर्ध्नि विवृहति बध्नाति ॥ ३ ॥ विवृढस्यैव बन्धनं द्रव्यान्तरानभिधानात्। विवृह्य बध्नातीत्यर्थः। तदभि-
धानं सूक्तसंबन्धार्थम् ॥ फालचमसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्च्छयित्वाध्यण्डे बृ-
हतीपलाशविदार्यौ वा प्रतिनीय पैद्वमिव ॥ ४ ॥ फालचिबुकायाः सोमचमसाकारं कृत्वा तत्र समानवर्ण-

वत्सायाः क्षीरं नीत्वा तत्र व्रीहीन् यवांश्च प्रक्षिप्य मूर्च्छयित्वा संचूर्ण्य । अध्यण्डा चाध्यण्डा च । दुग्धशु-
क्ला । अन्या यावत् पर्णफलेति प्रसिद्धा । बृहतीपलाशविदार्यौ वा प्रतिनीय । बृहती पलाशविदारी
वेली पलाशका इति प्रसिद्धा । प्रतिनीय । प्रतिनयनं क्षीरेण एकीकरणम् । ततो रजउद्वासायाः दक्षिणे ना-
सिकाछिद्रे दक्षिणेनाङ्गुष्ठेन नस्यकरणं पैद्ववदतिदेशात्[1] । समासयोरुक्तं जातकर्मणि[2] ॥ पर्वताद्दि-
५ व[3] इत्यागमकृशरमाशयति ॥ ५ ॥ निगदोक्तम् ॥ युगतर्द्मना संपातवन्तं द्वितीयम् ॥ ६ ॥ युगच्छिद्रेण संपातवन्तमागमकृशर-
मन्यम् । द्वितीयग्रहणे ह्य-
सति प्रथमस्यैव गुणविधिः स्यात् ॥ खे लूनांश्च पलाशत्सरून् निवृत्ते निघृष्याधाय शिश्ने ग्रामं प्रविशति ॥ ७ ॥
चकारः युगतर्द्मना संपातवत्करणार्थः । तस्मात्कर्मभेदः ॥ शमीमश्वत्थ[4] इति मन्त्रोक्तेऽग्निं मथि-
त्वा पुंस्याः सर्पिषि पैद्वमिव ॥ ८ ॥ 'शमीमश्वत्थ' इति सूक्तेन शमीगर्भादश्वत्थादधरारण्युत्तरारणीभ्यामग्निं
मथित्वा पुंवत्सायाः गोर्घृते तमग्निं प्रक्षिप्य रजउद्वासाया दक्षिणस्यां नस्यं दक्षिणेनाङ्गुष्ठेन ॥
१० दधिमन्थे पाययति ॥ ९ ॥ दधनि सक्तव आलोडिता दधिमन्थः । तस्मिन् प्रकृतमग्निं प्रतिनीय पाययति ॥
कृष्णोर्णाभिः परिवेष्टय बध्नाति ॥ १० ॥ सेक्ता उरणः कृष्णः । तस्योर्णाभिस्तमग्निं परिवेष्ट्य बध्नाति ॥
यन्तासि[4] इति मन्त्रोक्तम् ॥ ११ ॥ बध्नातीति शेषः पुंसवनप्रकरणात् । मन्त्र उक्तौ परिहस्तौ हस्तावर्ताविति प्रसिद्धौ ।
भेदेन संपाता द्वित्वश्रुतेः ॥ ऋधङ्मन्त्र[5] इत्येका यथेयं पृथिवी[6] अच्युता[7] इति गर्भदृंहणानि ॥ १२ ॥ एकेति सूक्तप्रसङ्गात् ।
यथेयं पृथिवीति चार्थसूक्तं लिङ्गात् । अच्युतेति शाखान्तरीयं सूक्तम् । एतेषां गर्भदृंहणफलानि कर्माणि भ-
१५ वन्ति ॥ जम्भगृहीतायाः प्रथमावर्जं ज्यां त्रिरुद्ग्रथ्य बध्नाति ॥ १३ ॥ जम्भेन गृहीतो गर्भो यस्या स्त्रियः तस्या ज्यां
त्रिगुणां कृत्वा बध्नाति 'ऋधङ्मन्त्र' इत्येतामृचं वर्जयित्वा ॥ लोष्टानन्वृचं प्राशयति ॥ १४ ॥ मृल्लोष्टानन्वृचम-
भिमन्त्रितान् जम्भगृहीतां प्राशयति । न संपाताः प्रोपसृष्टत्वात् ॥ श्यामसिकताभिः शयनं परिकिरति ॥ १५ ॥
गर्भिण्याः शयनं सर्वतः किरति कृष्णवर्णाभिः सिकताभिः । प्रथमावर्जमित्येव ॥ यामिच्छेद्वीरं जनयेदिति
धातृव्याभिः[8] उदरमभिमन्त्रयते ॥ १६ ॥ इति काम्यविधानम् । गर्भदृंहणसामान्यात् गर्भदृंहणमपीदं वीरपुत्र-
२० फलमपि ॥ प्रजापतिः[9] इति प्रजाकामाया उपस्थे जुहोति ॥ १७ ॥ आज्यम् । इह विधानं गर्भाश्रयत्वात् उपस्थ-
स्य ॥ लोहिताजापिशितान्याशयति ॥ १८ ॥ रक्तवर्णाजामांसानि आशयति स्त्रियं प्रजाकामाम् ॥
प्रपान्तानि ॥ १९ ॥ 'भक्तं सुरां प्रपाम्'[10] इत्येतानि चास्य कर्माणि भवन्ति ॥ यौ ते माता[11] इति मन्त्रोक्तौ बध्नाति ॥२०॥ बजः
पिङ्गश्च सर्षपौ मन्त्रोक्तौ शुक्लपीतौ संपातवन्तौ कृत्वा बन्धनम् । मन्त्रलिङ्गात् । 'यस्ते गर्भम्'[12] इति जाता-
नां रक्षणम् । अत एव गर्भदृंहणादनन्तरं विधानम् । गर्भदृंहणफलानि समाप्तानि ॥ यथेदं भूम्या अधि[13] य-

था वृक्षं[1] वाञ्छ मे[2] यथाऽयं वाह[3] इति संस्पृष्टयोर्वृक्षलिबुजयोः शकलावन्तरेषु स्थगराञ्जनकुष्ठमदुघ-
रेष्ममथिततृणमाज्येन संनीय संस्पृशति ॥२१॥ वृक्षस्य च वल्ल्याश्च संस्पृष्टयोः अन्तरा मध्ये यौ शकलौ सं॰
चितौ तौ गृहीत्वा । इषुः । स्थगरः । अञ्जनकुष्ठे प्रसिद्धे । मदुघं यष्टिमधु । रेष्ममथिततृणं वातोत्क्षिप्तं तृणम् । घृतेनै-
कीकृत्य सर्वाण्येकवद्भावात् । संस्पृशति । अनुरोधनं संवननत्वात् । 'यथा वृक्षं' 'वाञ्छ मे' इति ग्रहणं नानाक-
५ र्मत्वात् ॥ उत्तुदस्त्वा[4] इत्यङ्गुल्योपनुदति ॥२२॥ सूत्रखट्वायामङ्गुल्योप समीपस्थां नुदति । वशीकरणम् । मन्त्रलि-
ङ्गात् ॥ एकविंशतिं प्राचीनकण्टकानलंकृताननूक्तानादधाति ॥२३॥ 'या प्लीहानम्'[5] इति लिङ्गात् ब-
दरीकण्टकान् पूर्वाग्रान् सकृदनूच्यादधाति । अत एव आदधातिग्रहणम् । होमे हि सति प्रत्यृचं स्यात् ।
अलंकरणमनलंकृतादीनाम् ॥ कूदीप्रान्तानि ससूत्राणि ॥२४॥ एकविंशतिमेव बदर्यग्राणि ला-
क्षारक्तसूत्रेण वेष्टितानि आदधाति प्रकृतत्वात् ॥ नवनीतान्वक्तं कुष्ठं त्रिरह्नः प्रतपति त्रि-
१० रात्रे ॥२५॥ उत्पलकुष्ठं नवनीतेनाभ्यज्य त्रिः पूर्वाह्णमध्यंदिनापराह्णेषु कुष्ठं त्रिः प्रतप्यादधाति । एवं कृते प्रत-
पति त्रिः । उभयत्र मन्त्रावृत्तिः कालभेदात् ॥ दीर्घोत्पलेऽवगृह्य संविशति ॥२६॥ मञ्चकेषे अधःकृते
तत्र संविशति । संवेशने मन्त्रः । प्रधानवदभिधानात् । भर्तुरिदं कर्म 'ममैव कृणुतं वशे'[6] इति मन्त्रलिङ्गात् । संविश-
तिविधानं परपुरुषनिवर्तनार्थत्वात् । स्त्रीकर्मसु विधानम् । अनुरोधनमन्यसंपर्कनिरोधः । 'यन्तासि'[7] इ-
त्यत आरभ्यानुरोधनाधिकारः । अविशिष्टलिङ्गेषु तु स्त्रीवदनुरोधनस्योभयसंयोगात् ॥ उष्णोदकं
१५ त्रिपादे पत्तः प्रबध्याङ्गुष्ठाभ्याम-
र्दयञ्छेते ॥२७॥ त्रिपादशिक्ये उष्णोदकं कृत्वा शयनीयस्य पत्तः प्रकर्षेण बध्नाति । पादाङ्गुष्ठाभ्यामर्दय-
ञ्छिक्यं चालयञ्छेते । अर्द गताविति ' शब्दस्मृतेः । शयने न मन्त्रः ॥ प्रतिकृतिमावलेखनीं दार्भ्यूषेण भाङ्ग-
ज्येन कण्टकशल्ययोलूकपत्रयासितालकाण्ड्या हृदये विध्यति ॥२८॥ तत्प्रतिरूपाऽऽकृतिः प्रति-
कृतिः । आवलेखनी कुम्भकारचक्रादवलिखिता मृत् । भाङ्गी ज्या यस्य धनुषस्तद्भाङ्गज्यम् । तेन धनुषा व्य-
२० धः क्रियते इष्वा । ततो निर्गतयेत्यर्थः । तामिषुं कथयति । कण्टकं शल्यं यस्याः सा कण्टकशल्या । त-
या कण्टकशल्यया । तस्या एव विशेषणमाह— उलूकस्य इव पत्राणि यस्याः सा उलूकपत्रा । तया । असि-
तालकाण्ड्या । असितं कृष्णं अलं काण्डं यस्याः सा असितालकाण्डी । तया विध्यति । 'अलं 'लुप्तमकारः ॥

इति श्रीभट्टदारिलकृतौ कौशिकभाष्ये चतुर्थेऽध्याये एकादशी कण्डिका ॥११॥ ॐ । सहस्रशृङ्ग [1] इति स्वापनम् ॥ १ ॥
अभिप्रेतकार्यसिद्ध्यभिप्रायेण विघ्नकर्तॄणां कृतं यत् स्वापनम् । इह स्वापनकर्मविधानं ग्रामचरणार्थ-
त्वात् [2] । मैथुनचरणविघ्ननाशकर्तृत्वादित्यर्थः ॥ उदपात्रेण संपातवता शालां संप्रोक्ष्यापरस्मिन्
द्वारपक्षे न्युब्जति ॥ २ ॥ स्त्रीगृहमुदपात्रेण संपातवता संप्रोक्ष्य उदपात्रशेषमपरस्मिन् द्वार-
५ पक्षे न्युब्जति । द्वारपक्षं कपाटम् । परद्वारपक्षादितरं सव्यकपाटम् । तस्य बुध्ने आवर्जयति ॥ एवं नग्नः ॥ ३ ॥ शाटक-
मपनीय पूर्वं कर्म करोति एवंशब्दात् ॥ उलूखलमुत्तरां स्रक्तिम् । उलूखलमभिमन्त्रयते । उत्तरां स्रक्ति
शयनीयगृहस्योत्तरं कोणमभिमन्त्रयते । दक्षिणं शयनपादम् । स्त्रीमञ्चकपादं दक्षिणमभिमन्त्रयते । तन्तू-
नभिमन्त्रयते ॥ ४ ॥ उलूखलादीनां कुतोऽभिमन्त्रणसंबन्धः । अत्र वत्सशर्मपादाः पठन्ति —' उलूखलादीनामभि-
मन्त्रणम् । तन्तुभिः समानविभक्तित्वात् । असमासस्य च भेदार्थत्वात् '॥ अस्थाद्द्यौः[3] इति निवेष्टनम् ॥ ५ ॥ निवेष्टनं नाम प्र-
१० द्राविणीव्यभिचारिण्योर्निरोधः । मन्त्रलिङ्गात्[4] ॥ आवेष्टनेन वंशाग्रमवबध्य मध्यमायां बध्नाति ॥ ६ ॥ अवसज्य
मध्यमायां बन्धनम् । संपाताः [5] स्युः ॥ शयनपादमुत्पले च ॥ ७ ॥ मञ्चकपादमुत्पले च । बध्नातीति चकारात् ॥
आकृष्टे च ॥ ८ ॥ आकृष्टः मातृकेति प्रसिद्धाभिधानः तस्मिन् । शयनपादं बध्नातीति चकारात् ॥ आकर्षेण
तिलान् जुहोति ॥ ९ ॥ आकर्षः लोहकरणम् । अङ्गाराकर्षणार्थं कुटकः । तेन तिलान् जुहोति । एवं तिलतन्त्रम् ॥
इदं यत्प्रेण्य[6] इति शिरःकर्णमभिमन्त्रयते ॥ १० ॥ शिरश्च कर्णौ च शिरःकर्णम् [7] । भेदेनाभिमन्त्रणम् । उभयोर्निरोधनेऽभि-
१५ मन्त्रणम् । उभयोर्निरोधनमविशेषत्वात् ॥ केशान् धारयति ॥ ११ ॥ यां निरोद्धुमिच्छति तस्याः केशान् धा-
रयति ॥ भगेन मा[8] न्यस्तिका[9] इदं खनामि[10] इति सौवर्चलमोषधिवत् । स्रजवत् । शुक्लप्रसूनम् । मूलं दर्भेण
परिवेष्ट्य[11] । शिरस्युपचृत्य ग्रामं प्रविशति ॥ १२ ॥ मूलग्रहणं हि बन्धनं स्यात् । अथ ओषधिवत् [12] । सुवर्चला
प्रसिद्धा त्रिसन्ध्यासदृशी । शुक्लप्रसूनं कर्मान्तरेण मूलविशेषणत्वात् ॥ रथजितां[13] इति माषस्मरान् निवपति ॥ १३ ॥
रथजितामिति त्रीणि समा-
नान्तरत्वात्[14] । माषस्मरा नाम उप्तपूर्वेषु अन्यस्मिन् वा उप्ते ये माषा जाता ते माषस्मराः । तान् निवपति ।
२० यस्या निरोधमिच्छति तस्याः शिरसि ॥ शरभृष्टीरादीप्ताः प्रतिदिशमभ्यस्यत्यर्वाच्या आवलेखन्याः ॥ १४ ॥
आवलेखनी कथिता[15] अर्वाची अभिमुखा । शरफलीः ताः प्रतिदिशमभिमुखायाः क्षिपति । अग्निना
प्रदीप्ताः । अनिवृत्तविशेषणत्वात् ॥ भगमस्या वर्चं [16] इति मालानिष्प्रमन्ददन्तधावनकेशमीशानहृता-
या अनुस्तरण्या वा कोशमुलूखलदरणे त्रिशिले निखनति ॥ १५ ॥ विद्वेषणार्थत्वात् कर्मभेदः । तस्या मा-
ला स्रक् । तस्या निष्प्रमन्दः क्रीडाएवर्गायेन्दुकः । तस्या दन्तधावनम् । तस्या एव च केशाः । समुच्चय एकवद्भावात् ।

ज्वरहताया गोः । उलूखलदरणे तिस्रः शिला निहत्य तत्र कोशं निखन्यात् । अत उलूखलं निखन्यात् । दरणः उलूखले गर्तः विद्वेषणलिङ्गात्[1] ॥ मालामुपमथ्यान्वाह ॥ १६ ॥ तस्या एव पुष्पस्रजं विमृद्य अन्वाह तामेव स्त्रियम् ॥ त्रीणि केशमण्डलानि कृष्णसूत्रेण विग्रथ्य त्रिशिलेऽश्मोत्तराणि व्यत्यासम् ॥ १७ ॥ तस्या एव त्रीन् केशपुञ्जान् कृष्णसूत्रेण बद्ध्वा त्रिशिले गर्तें निहन्ति । केशमण्डलमश्मनि । एवमश्मोत्तराणि भवन्ति । व्यत्यासवचनमधस्त्रयाणामपि निखननं मा भूत् ॥ अथास्यै भगमुत्खनति 'यं ते भगं निचख्नुस्त्रिशिले यं चतुःशिले । इदं तमुत्खनामि प्रजया च धनेन च' इति ॥१८॥ सौभाग्यमस्याः कथं स्यादिति । अथेत्यनन्तरम् । निखातस्योत्खननसंप्रत्ययार्थम् । निखननं कर्तुरेवोत्खननसंप्रत्ययार्थम् ॥ इमां खनामि[2] इति बाणापर्णी लोहिताजाया द्रप्सेन संनीय शयनमनु परिकिरति ॥ १९ ॥ रक्तवर्णाया अजाया द्रप्सेन बाणापर्णी संक्षुद्य एकीकृत्य । बाणापर्णी शरपुङ्खेति प्रसिद्धा । तया सपत्न्याः शयनमनु परिकिरति ॥ अभि तेऽधाम्[3] इत्यधस्तात् पलाशमुपचृतति ॥ २० ॥ पादेन । शयनस्याधस्तात् बाणापर्ण्याः पत्रं बध्नाति ॥ उप तेऽधाम्[4] इत्युपर्युपास्यति ॥ २१ ॥ पादेन । उपरि क्षिपति ॥ कामं विनेष्यमाणोऽपाघेनासंख्याताः शर्कराः परिकिरन् व्रजति ॥ २२ ॥ काममिच्छामपनेष्यन् परपुरुषगम् 'अप नः शोशुचत्'[5] इत्यनेनापरिगणिताः शर्करा अभिमन्त्र्य ताः परिकिरन् व्रजति । इह विधानं स्त्रीकामस्य विनेयत्वात् । ईर्ष्याविनाशनान्यत एवेह पठितानि ॥ संमृद्नञ्जपति ॥२३॥ ताः संमर्दयञ्जपति ॥ असंमृद्नन् ॥२४॥ असंख्याताः शर्करा गृहीत्वा जपति ॥ ईर्षाया ध्राजिं[6] जनाद्विश्वजनीनात्[7] त्वाष्ट्रेणाहम्[8] इति प्रतिजापप्रदानाभिमर्शनानि ॥ २५ ॥ यस्येर्ष्यां विनेतुमिच्छति जपति अन्यतमम् । जनादिति द्वे । प्रदानं यत्किंच अभिमन्त्र्य प्रददाति । अभिमर्शनं यस्येर्ष्यां विनेतुमिच्छति तमभिमृश्य जपति ॥ प्रथमेन वक्षणासु मन्त्रोक्तम् ॥ २६ ॥ 'ईर्ष्याया ध्राजिम्'[6] इत्यनेन हृदय्याग्निनिर्वापणं मन्त्रोक्तत्वात् । आध्मातस्य वा दृतेर्मोचनम्[9] ॥ अग्नेरिव[10] इति परशुफाण्टम् ॥ २७ ॥ परशुना तप्तेन क्वथितं फाण्टं पाययति[11] । प्रमेहणवत्[12] । परशुः कुठारः । मन्युविनयनमिह विधानं मन्योः स्त्रीविषयत्वात् ॥ अव ज्यामिव[13] दृष्ट्वाऽश्मानमादत्ते ॥ २८ ॥ एकया । स्त्रियं दृष्ट्वा पाषाणमादत्ते ॥ द्वितीयया निदधाति ॥ २९ ॥ अश्मानं भूमौ निदधाति । द्वितीययर्चा ॥ तृतीययाभिनिष्ठीवति ॥ ३० ॥ तमेवाश्मानम् ॥ छायायां सज्यं करोति ॥३१॥ यन्निमित्तो मन्युस्तस्य छायायां धनुषि ज्यामारोपयति ॥ अयं दर्भ[14] इत्योषधिवत् ॥३२॥ दर्भमूलं दर्भेण परिवेष्ट्य केशेषूपचृतति[15] । सर्वमन्युविनयनं लिङ्गाविशेषात् । 'यथावश'[16] इति सर्वत्रोपपत्तेः स्त्रीनिमित्तमोषधिवचनं प्रकरणात् । ओषधिवदिति कर्मातिदेशार्थम् ॥ अग्ने जातान्[17] इति न वीरं जनयेत् प्रान्यान्[18] इति न विजायेतेत्यश्वतरीमूत्रमश्ममण्डलाभ्यां संघृष्य भक्तेऽलंकारे ॥ ३३ ॥ अश्वतरी खरी । तस्या मूत्रमश्ममण्डलाभ्यां संघृष्य तद्भक्ते कृत्वा तत् तस्यै ददाति । अथ चास्या अलंकारे ॥ सीमन्तमन्वीक्षते ॥ ३४ ॥ मन्त्रमुक्त्वा केशसीमन्तमन्वीक्ष-

ते ॥ अपि वृश्च[1] इति जायायै जारमन्वाह ॥ ३५ ॥ तृचेन प्रसूताया विटमन्वाह ॥ क्लीबपदे बाधकं धनुर्वृश्चति ॥ ३६ ॥ बाधकं धनुः षण्ढपदे कृत्वा छिनत्ति । विटः पुमान् न भवति ॥ आशयेऽश्मानं प्रहरति ॥ ३७ ॥ आशयः जारस्य संगमनदेशः संकेतदेशः । तत्राश्मानं निक्षिपति ॥ तृष्टिके[2] इति बाणापर्णीम् ॥३८॥ शरपुङ्खामाशये प्रहरति द्वाभ्याम् ॥ आ ते दद[3] इति मन्त्रोक्तानि संस्पृशति ॥ ३९ ॥ वक्षणा हृदयं मुखमिति मन्त्रोक्तानि संस्पृशति जारस्य ॥

५ अपि चान्वाह ॥४०॥ जारम् । स्त्रीकर्माणि समाप्तानि । फलवन्ति च विज्ञानान्यन्यतन्त्र उच्यन्ते । संहिताक्रमकारणात् ॥ इति महावेदार्थविद उपाध्यायवत्सशर्मणः प्रपौत्रस्य भट्टदारिलकृतौ कौशिकभाष्ये द्वादशमी कण्डिका ॥ १२ ॥ चतुर्थोऽध्यायः समाप्तः ॥ ॐ । अम्बयो यन्ति[4] इति क्षीरौदनोत्कुचस्तम्बपाटाविज्ञानानि ॥ १ ॥ पूर्वादीनि[5] समाप्तानि संहिताविधिग्रहणे । अम्ब्यादीनां प्रतीकानां संहिताविधिरुच्यते । 'अम्बयो यन्ति' इत्यस्य सूक्तस्य विज्ञानफलं कर्मोच्यते । कस्य संशये प्राणनाशे गमनागमनाभ्यामभ्यस्यते । सदसद्योगात् व्या-

१० धितस्य जीवनमरणाभ्याम् । प्रजनने स्त्रीपुंयोगात् । एवमन्यत्रापि । यद्येतदेवं भवेत् तत्रायं विकारो भवेदिति संकल्पयेत् । न चेत्ततो न । कानि पुनस्तानि । क्षीरौदनोत्कुचाः । 'तिस्रः स्नावरज्जूः'[6] इति । स्तम्बो वा यदि वा पाटा । उत्कुचक्षीरौदनयोस्तु कर्मणः फलनिर्देशः । स्तम्बपाटाविज्ञानानीत्यभिमन्त्रणानि 'सर्वाण्यभिमन्त्र्याणि'[7] इति वचनात् । विज्ञानानि लोके प्रसिद्धानि भवन्ति । उपश्रुतयो न्यासाष्टकादीनि विज्ञानानि । अस्य सूक्तस्यापृथक्त्वं विज्ञानस्य

१५ समासकरणात् । अत एव चोत्कुचक्षीरौदनयोः सफलयोः निर्देशो अभिमन्त्रणप्रोक्षणम् । तथा चेति ॥ सांग्रामिकं वेदिविज्ञानम् ॥ २ ॥ संग्रामे भवं सांग्रामिकम् । जयपराजयावधारणफलं संग्रामकर्म । वेदिं कृत्वा प्रकृतेन सूक्तेनाभिमन्त्र्य चिन्तयेद्विशेषम् ॥ वेनस्तत्[8] इति पञ्चपर्वेषुकुम्भकमण्डलुस्तम्बकाम्पीलशाखायुगेध्माक्षेषु पाण्योरेकविंशत्यां शर्करास्वीक्षते ॥ ३ ॥ 'वेनस्तत्' इति अभिमन्त्र्य ईक्षते । उभयोर्हस्तयोरेकविंशतिं शर्कराः कृत्वेक्षते । पाण्योरसमासकरणं शर्कराणां पाणिसंयोगार्थम् ॥ कुम्भमहतेन परिवेष्टयाधाय शयने

२० विकृते संपातानतिनयति ॥ ४ ॥ परीति सर्वतो वेष्टनम् । अतिनयतीत्यभिमन्त्रणनिवृत्त्यर्थम् ॥ अनतीकाशमवच्छाद्यारजोवित्ते कुमार्यौ येन हरेतां ततो नष्टम् ॥ ५ ॥ अन्धकारकालं प्राप्याऽऽच्छादयति कुमार्यौ । यदि च अरजोवित्ते कुमार्यौ भवतः । रजः ययोर्न स्यात् । एतं कुम्भं यतो हरतस्ततो नष्टं विज्ञेयं सुवर्णादि ॥ एवं सीरे साक्षे ॥ ६ ॥ हले गोभ्यां युक्ते एवमेव कुर्यात् । अहतेन परिवेष्ट्य कुमार्योरेव प्राजनम् ॥ लोष्टानां कुमारीमाह यमिच्छसि तमादत्स्वेति ॥ ७ ॥ चतुरो लोष्टान् गृहीत्वा प्रैषं ददाति 'कुमारि लोष्टानां यमिच्छसि तमादत्स्व' इति । आकृतिलोष्टः । व-

ल्मीकलोष्टः ॥ वल्मीकलोष्टः चतुष्पथलोष्टः ॥ श्मशानलोष्टः उत्तरसूत्रेभ्यः अपयं लोष्टविशेषः ॥ ७ ॥ आ
दानलोष्टं वाल्मीकौ कल्याणी ॥ अनयोर्लोष्टयोर्ग्रहणं अभिलिखितार्थं संपतु ॥ ८ ॥ चतुष्पथाद्
दुर्वारिणी ॥ कुमारीं च हन्तु ॥ पुरुषानुगच्छति ॥ ९ ॥ श्मशानान्निरजीवति ॥ मैवं कुमारीत्श्मशानानु
गृहीत्वाहरति नृएवं पूर्ववत् ॥ १० ॥ उदकाञ्जलिं निनयत्याह ॥ कुमारीं ब्रूयात् ॥ ११ ॥ प्राचीनमपाक्षियत्याकुल्यो
दा ॥ पूर्वस्यां दिशि अञ्जलिं क्षिपत्यभिमन्त्र्य फलं ॥ विज्ञानसंहितानि कर्माणि प्रथितानि ॥ नक्षत्राणि मि
तिकपञ्चीकानि तस्मान्निषां विधेः कृतिः ॥ १२ ॥ इति भट्टदारिलकृतौ कौशिकभाष्ये पञ्चमोऽध्यायः प्रथमा
कण्डिका ॥ १ ॥ ॐ जरायुज इति दुर्दिनमायन्मन्त्रं निष्ठति ॥ दुर्दिनं मेघावीनि नाशाहितुः ॥ नाहिनाशायाग
मनुसूक्तं जपन्तु ॥ मत्युतिष्ठति गच्छतीत्यर्थः ॥ मायज्ञितं दुर्दिनाम्प्रयतान्तु ॥ यद्येवं कस्मत्सु किं कृत उ
च्यते ॥ प्रायश्चित्तानन्तु ॥ अन्तश्चमसुरकर्ते ॥ प्रचोदरकर्ते ॥ मत्युतिष्ठति प्रहरणा ॥ मात्रं चेत् दुष्कृत
मंत्रार्थस्य चिकालीनिष्पत्तिः स्तनप्रविनाशः स्यात् ॥ १३ ॥ अस्यमुक्तं कित्तु करतादाय ॥ मत्युतिष्ठति ॥ वि
वाक्यशेषः ॥ प्रसिसिप्रसिद्धः ॥ उल्मुकं वादाय गृहीत्वा समुच्चयः एकवद्भावात् ॥ किंकुर्वन् मुसलीकोऽसीर ॥
नानादाय मत्युतिष्ठति दुर्दिने किंशुकरूणां समासो विकल्पार्थः ॥ न च दुर्दिनं मत्युत्तिष्ठतीति शेषः ॥ साक
हत्वानु ॥ १४ ॥ नमो ललाटमुन्मृज्जन् ॥ न न दुर्दिनं प्रत्युत्तिष्ठतीति शेषः ॥ साकाक्षसर्पान्निकम्पाल ल
टमसिसे ॥ न नभदयन्तु ॥ १५ ॥ उत्सायवाबतास्मरकपालेऽङ्गारान्करान्वजुहोति ॥ शूर्पपटलमपनीयग्रहानव
हिरवस्थितोऽङ्गारपूर्णकपाले त्रिशूपत्राणि जुहोति ॥ शर्कराश्चाजुहोति ॥ विकल्पः साधनत्वात् कनङ्गीवा
ह्ना ॥ १६ ॥ करीरा काबाद्याति ॥ केरापर्णीनियासुराष्टवरीकिनिमालवक्तुडवाघने राकोवार्दधासांग
रकपालेनचोभयत्रतं त्रेविक्षष्टदेव्यत्वात्तु ॥ प्रादध्रतीवनन्नर्हविस्ममांसा राये ॥ १७ ॥ वर्षपरितः प्रतिलो
मुकर्षितः त्रिः ॥ परिक्रम्य खदायामकेक्षिप्य संवपति ॥ एवं पूर्वत्र अर्कक्षिप्य संवपति ॥ वर्षेणानि पीडि
तो वर्षपरितः विषाङ्गारकादिर्योगे निर्मितेऽभयोर्वक्ष्यमाणं प्रायश्चित्तं त्रिः परिक्रम्य खदायामर्थे क्षि
प्य संवपति ॥ गर्तेः स्वप्नावजः त्रिः सर्वत्र गत्वा खदायामर्कसमूलनालं प्रकृतेन सूक्तेन पिण्डीकृत्य क्षिप
ति ॥ शीघ्रं न कालान्तरं प्रतीक्षते ॥ नमस्ते अस्तु विद्युत इत्युक्तनयोत्तु रित्युत्तानि युक्तमापादयति परिक्र
म्य खादायामश्चानि युक्तं क्षिप्य संवपतीति शेषः ॥ साकाङ्क्षत्वात्तु ॥ समञ्जयः स्यात् ॥ अश्मानि हिमशर्कराणा
नक्षत्राश्मनि विनाशितानि तरदश्मानि युक्तं न शीघ्रं खदायां सकृन्निक्षिपति ॥ अश्मानि विषकण्टकाश्मवर्षाणि ॥

ल्मीकलोष्टः । चतुष्पथलोष्टः । श्मशानलोष्टः । उत्तरसूत्रेभ्यः अयं लोष्टविशेषः ॥ आ-
कृतिलोष्टवल्मीकौ कल्याणम् ॥ ८ ॥ अनयोर्लोष्टयोर्ग्रहणे अभिलषितार्थसंपत् ॥ चतुष्पथाद् ब-
हुचारिणी ॥ ९ ॥ कुमारी बहून् पुरुषान् गच्छति ॥ श्मशानान्न चिरं जीवति ॥ १० ॥ सैव कुमारी श्मशानात् लोष्टं
गृहीत्वा हरति । एवं पूर्वत्र ॥ उदकाञ्जलिं निनयेत्याह ॥ ११ ॥ कुमारीं ब्रूयात् ॥ प्राचीनमपक्षिपन्त्यां कल्या-
५ णम् ॥ १२ ॥ पूर्वस्यां दिशि अञ्जलिं क्षिपन्त्या अभिप्रेतफलम् । विज्ञानसहितानि कर्माणि कथितानि । तदन्तरा नैमि-
त्तिकप्रतीकानि । तस्मात् तेषां विधेः कृतिः ॥ इति भट्टदारिलकृतौ कौशिकभाष्ये पञ्चमेऽध्याये प्रथमा
कण्डिका ॥ १ ॥ ॐ । जरायुज[1] इति दुर्दिनमायन् प्रत्युत्तिष्ठति ॥ १ ॥ दुर्दिनं मेघानां विनाशहेतुः । तद् विनाशाय आग-
च्छन् सूक्तं जपन् प्रत्युत्तिष्ठति । गच्छतीत्यर्थः । प्रायश्चित्तं दुर्दिनाश्रयत्वात् । यद्येवं क्रमस्तु किं कृतः । उ-
च्यते । प्रायश्चित्तत्वात् ॥ अन्वृचमुदवज्रैः[2] ॥ २ ॥ ऋचा ऋचोदवज्रैः प्रत्युत्तिष्ठति । प्रहरणमात्रं चैतदुदवज्र-
१० संस्कारस्य चिरकालनिष्पत्तेः । ततश्च विनाशः स्यात् ॥ अस्युल्मुककिष्कुरूनादाय ॥ ३ ॥ प्रत्युत्तिष्ठतीति
वाक्यशेषः । असिः प्रसिद्धः । उल्मुकं चादाय गृहीत्वा । समुच्चयः एकवद्भावात् । किष्कुरवः बृसीकशेरवः ।
तानादाय प्रत्युत्तिष्ठति दुर्दिनम् । अस्युल्मुककिष्कुरूणां समासो विकल्पार्थः ॥
नग्नो ललाटमुन्मृजानः ॥ ४ ॥ नग्नः दुर्दिनं प्रत्युत्तिष्ठतीति शेषः । साकाङ्क्षत्वसन्निधिभ्याम् । लला-
टं प्रसिद्धम् । उन्मर्दयन् ॥ उत्साद्य बाह्यतोऽङ्गारकपाले शिग्रुशर्करा जुहोति ॥ ५ ॥ गृहपटलमपनीय गृहाद्ब-
१५ हिरवस्थितोऽङ्गारपूर्णे कपाले शिग्रुपत्राणि जुहोति । शर्करा वा जुहोति । विकल्पः साधनत्वादेकवद्भावा-
च्च ॥ केरार्कावादधाति ॥ ६ ॥ केरापर्णीति सुराष्ट्रेषु । वरीकेति मालवेषु । उत्साद्य केरार्कावादधात्यङ्गा-
रकपाले । न चोभयत्र तन्त्रं विप्रकृष्टदेशत्वात् । आदधातिवचनं हविर्धर्माभावार्थम् ॥ वर्षपरीतः प्रतिलो-
मकर्षितस्त्रिः परिक्रम्य खदायामर्कं क्षिप्रं संवपति ॥ ७ ॥ एवं पूर्वत्र । वर्षेणातिपीडि-
तो वर्षपरीतः । वर्षाधारादियोगनिर्गतः । उभयोर्वक्ष्यमाणं प्रायश्चित्तम् । त्रिः परिक्रम्य खदायामर्कं क्षि-
२० प्रं संवपति । खदा गर्तः स्वभावजः । त्रिः सर्वत्र गत्वा खदायामर्कं समुत्तजालं प्रकृतेन सूक्तेन पिण्डीकृतं क्षिप-
ति शीघ्रं न कालान्तरं प्रतीक्षते ॥ नमस्ते अस्तु[3] यस्ते पृथुः स्तनयित्नुः[4] इत्यशनियुक्तमपादाय ॥ ८ ॥ त्रिष्परिक्र-
म्य खदायामशनियुक्तम् । क्षिप्रं संवपतीति शेषः । साकाङ्क्षत्वात् सन्निधेः स्यात् । अशनिर्हिमशर्करापा-
तः । तेनाशनिना विनाशितं तदशनियुक्तम् । तत् शीघ्रं खदायां सूक्तान्ते क्षिपति । अशनिनिष्यन्दः अश्मवर्षाणि ।

**अशान्युपशमफलं लिङ्गात्** ॥ प्रथमस्य[1] सोमदर्भकेशानीकुष्ठलाक्षामञ्जिष्ठीबदरहरिद्रं भूर्जशकलेन परिवेष्ट्याधःशिरस्युर्वरामध्ये निखनति ॥ ९ ॥ **प्रथमस्य सूक्तस्य । सोमदर्भौ प्रसिद्धौ । केशानी प्रसारिणीति उच्यते । उपक्लिन्नेषु प्राकारेषु प्रायेण जायते । कुष्ठादीनि प्रसिद्धानि । समुच्चय एकवद्भावात् । भूर्जावयवेन सर्वाणि वेष्टयित्वा अधःशिरः छिद्रं कृत्वाऽभिमन्त्र्य सस्यमध्ये निखनति । अशनिरक्षा** ॥ दधिनवे नाश्ना-
५ त्या संहरणात् ॥ १० ॥ **दधि च नवं धान्यं च न भक्षयेद्यावन्न धान्यं गृहमानीतम्** ॥ आशापालीयं तृतीयावर्जं दृंहणानि ॥ ११ ॥ **'आशानामाशापालेभ्यः'[2] इत्यस्य दृंहणफलानि कर्माणि । बहुवचनादुपपत्तेः । ज्योतिरायतनस्य भौमसंबन्धात् । 'उभयान् संपातवतः' इति द्वितीयम् । तृतीयम् 'एकतोऽन्यत् शयनं भौमं जपति' इति । भौमस्य द्वितीयासंबन्धात् । आशापालीयस्य च विशेषजपमात्रेण तृतीयामृचं[3] मुक्त्वा ॥ अत एव भौमेन सह ।** भौमानि कर्माणि ॥ १२ ॥ **'सत्यं बृहत्'[4] इत्यस्य बहुफलानि कर्माणि ॥ उभयोः सूक्तयोः कर्माण्युच्यन्ते ।** पुरोडाशाश्मोत्तरानन्तःस्रक्तिषु निदधाति ॥ १३ ॥ **पुरोडाशाश्चत्वारः । अभिम-**
१० **न्त्र्य न संपाताः शब्दान्तरत्वात् । गृहस्याभ्यन्तरकोणेषु निहन्ति । एकैकस्य पुरोडाशस्य पाषाणमुपरि कृत्वा** ॥ उभयान् संपातवतः ॥ १४ ॥ **पुरोडाशान् अश्मनश्च संपातवतः करोति । निखननं पूर्ववत् । प्रतिद्रव्यं सूक्तानुवृत्तिः । निदधातीति शेषः ।** सभाभागधानेषु च ॥ १५ ॥ **पूर्वकर्मणी भवतः । सभा मेलकस्थानम् । भागधानं महाधनगृहमिति । स्रक्तिष्विति देशनियमः । चकारेण सर्वातिदेशः** ॥ असंतापे ज्योतिरायतनस्यैकतोऽन्यच्छयानो भौमं जपति ॥ १६ ॥ **एकाग्नेरायतनस्य असंतापयुक्ते देशे शयानोऽधोमुखः भौमं जपति ।**
१५ **एकेन पार्श्वेन पर्यावर्तते । आशापालीयं तु शयानो जपति । नियमस्तु भौमस्यैव** ॥ इयं वीरुद्[5] इति मधुघं खादन्नपराजितात् परिषदमाव्रजति ॥ १७ ॥ **पूर्वोत्तरकोणात् परिषदं जनसमूहमागच्छति । ज्येष्ठीमधुकं भक्षयन् । आव्रजने मन्त्रः । तिद्धभिधानात् । न चोच्छिष्टं दोषवचनात् । प्रत्यर्थिजयदोषशमनं प्रायश्चित्तम्** ॥ नेच्छत्रुः[6] इति पाटामूलं प्रतिप्राशितम् ॥ १८ ॥ **पाटामूलं 'खादन्नपराजितात्' प्रतिप्राशितमाव्रजति । लिङ्गात्** ॥ अन्वाह ॥ १९ ॥ **प्रतिवादिनमन्वाह** ॥ बध्नाति ॥ २० ॥ **यदि मूलसंप्रत्ययः अन्वाहेति मध्ये किं पठितम् । अत्र वचनव्यवधानमेकक-**
२० **र्मत्वात्** ॥ मालां सप्तपलाशीं धारयति ॥ २१ ॥ **पाटास्रजं सप्तपर्णां बिभर्ति । सर्वस्य धारणस्य बाहौ बन्धनम् । मन्त्रलिङ्गात् । न संपाताः शब्दान्तरत्वात् । 'दूष्या दूषिरसि'[7] इत्यस्य स्राक्त्यस्य बन्धनं स्यात् । अत्रापराजितात् परिषदमाव्रजति । तस्योपजीवनार्थं स्वक्रमे ह्येतत् सर्वं पुनरुच्यते** ॥ ये भक्षयन्त[8] इति परिषद्येकभक्तमन्वीक्षमाणो भुङ्क्ते ॥ २२ ॥ **एकत्रैव भुञ्जत इति एकभक्तम् । परिषद्येकभोजने परिषत्तुल्यसमवायमात्रं लोकोपचारादिति । तामेव परिषदं ग्रासादनन्तरमीक्षमाणः । कल्पान्तरे यत्रैतद् बहूनां मध्ये एको भुङ्क्त इति अ-**

विशेषत्वात् ॥ ब्रह्म जज्ञानम्[1] इत्यध्यायानुपाकरिष्यन्नभिव्याहारयति ॥ २३ ॥ उपाकर्मसु शिष्यानभिव्याहारय-
ति सूक्तम् । कलहपरिहारदोषनाशात् प्रायश्चित्तत्वम् ॥ प्राशमाख्यास्यन् ॥ २४ ॥ प्रतिप्रश्नं कथयिष्यन् सूक्तमभि-
व्याहारयति कारयिता । न तन्निवृत्तिः । आख्यास्यन्निति कर्तृनिर्देशात् । प्रतिवादिनो जयदोषनाशात् प्रायश्चि-
त्तत्वम् ॥ ब्रह्मोद्यं वदिष्यन् ॥ २५ ॥ वेदवाक्यविचारं कथयिष्यन् प्रत्यर्थिना सह । प्रतिवादिनो जयदोषनाशात् प्रायश्चित्त-
५ त्वम् ॥ ममाग्ने वर्चः[2] इति विभङ्क्ष्यमाणः प्रमत्तरज्जुं धारयति ॥ २६ ॥ प्रमत्तरज्जुः चाक्रिकाणामवलम्बनरज्जुः । ता-
मभिमन्त्र्य विभागं करिष्यन् पिता बध्नीयात् । न संपाताः शब्दान्तरत्वात् । मालावत्[3] कलहनाशदोषापगमात् ॥
सभा च मा[4] इति भक्षयति ॥२७॥ 'सभा च मा' इति क्षीरौदनादीनामन्यतमम्[5] । सभां प्रविशन् । संपाता भक्ष्यत्वात्[6] ॥ स्थूणे गृह्णा-
ति । सभास्थूणे सूक्तान्ते गृह्णाति । सूक्तभेदो देशभेदात् । उपतिष्ठते ॥२८॥ सभां च ॥ यद्वदामि[7] इति मन्त्रोक्तम् ॥२९॥ मन्त्रमुक्त्वा
वदेत् ईक्षेत वा ॥ अहमस्मि[8] इत्यपराजितात् परिषदमाव्रजति ॥ ३० ॥ यत्रतत्रस्थः परिषदमागच्छति ॥
१० पञ्चमेऽध्याये द्वितीया कण्डिका ॥ ॐ । अप्रतिहार्यां कृत्यामुक्त्वा प्रतिहरणमुच्यते । दूष्या दूषिरसि[9] इ-
ति स्राक्त्यं बध्नाति ॥ १ ॥ एकं कर्म । शान्त्युदकान्ते बन्धनम् । आज्यभागान्ते शान्त्युदकम् । तत्र
शान्त्युदकक्रियादर्शनात् । पूर्वोक्ते कर्म स्मृतमुत्तरतन्त्रादनन्तरमेव कृत्यादेः प्रतिहरणात् । अस्य
चात्मरक्षार्थत्वात् । अतः कृत्योत्तरतन्त्रं निशाप्रतिपालनम् । स्रक्त्यविकारः स्राक्त्यः मणिः । स्राक्त्यस्तिलकः ।
कृत्याशमनार्थम् ॥ पुरस्तादग्ने पिशङ्गं गां कारयति ॥ २ ॥ तन्त्राग्नेः पूर्वस्मिन् देशे कृष्णपिङ्गलवर्णं गां वृषभं का-
१५ रयति । अन्येन मारयति ॥ पश्चादग्नेर्लोहिताजम् ॥ ३ ॥ रक्तवर्णं छागं पश्चिमे देशे कारयति । पुनरग्निग्रहणं गो-
मारणदेशे मा भूत् ॥ यूषपिशितार्थम् ॥ ४ ॥ यूषार्थं गां पिशितार्थमजम् । यूषा रसकः । पिशितानि मांसानि । न चा-
नयोर्वशाधर्माः[10] । यूषपिशितार्थत्वात् ॥ मन्त्रोक्ताः ॥ ५ ॥ या मन्त्रे उक्ता ओषधयः । कास्ताः । आह-दर्भापामार्गसह-
पाटाः । आमपात्राद्यत्र न भवति । ओषधिनिर्देशात् ओषधिसंप्रत्ययः ॥ वाशाकाम्पीलसितीवारसदंपुष्पम-
वधाय ॥ ६ ॥ वाशा आटरूषकः । काम्पीलः कथितः । सितीवारः अपामार्गसदृशो महान् । सदंपुष्पा त्रिसन्ध्या ।
२० ओषधिसमुच्चय एकवद्भावात् । मन्त्रोक्तादीनां कर्मोत्तरमवधानमावपनसंयोगात् । होमोत्तरमावापः ।
तस्यामवधाय । दूष्या दूषिरसि[9] ये पुरस्तात्[11] ईशानां त्वा[12] समं ज्योतिः[13] उतो अस्य बन्धुकृत्[14] सुपर्णस्त्वा[15] यां ते च-
क्रुः[16] अयं प्रतिसरो[17] यां कल्पयन्ति[18] इति महाशान्तिमावपते ॥ ७ ॥ 'ये पुरस्तात्' इति क्रमभेदः प्रयोगक्रमार्थः । प्रतीका-
नां समुच्चयः द्वितीयान्तत्वात् । महाशान्तिः कथिता[19] । एतानि प्रतीकानि । आवपते महाशान्तिं च इति ।
चलोपोऽर्थगतः ॥ मिश्यवमुच्योष्णीष्यग्रतः प्रोक्षन् व्रजति ॥ ८ ॥ रात्राववमुच्योपानहौ[20] इति । 'पृथि-

ध्यै[11] इति घोराणामन्तर्भवति। अत्र सर्वकृत्यान्यासः अत्र च प्रतिहरणं विहितम्। तस्या उपयोगार्थः चः इह पठितः। उष्णीषं शिरोवेष्टनं यस्यास्ति कर्तुः सोऽग्रतः प्रथमं शान्त्युदकं प्रोक्षति। ऋव्याच्छमनवत्[2]। प्रोक्षणे मन्त्राः॥ यतायै यतायै शान्तायै...इति॥ ९॥ यताया इत्यादयः इतिकरणपर्यन्ताः॥ अभावादपविध्यति॥ १०॥ कृत्याभावे संस्काराणामपक्षेपः। कृत्यावलगशिक्याद्यभावे कल्पोक्तानां, इह चोक्तानामभावे संस्कारा वक्ष्यमाणाः॥

५ कृत्ययामित्रचक्षुषा समीक्षन् कृतव्यधनि[3] इत्यवलिप्तं कृत्यया विध्यति॥ ११॥ मित्रचक्षुषा समीक्षन् उपप्रशान्तायाः कृत्याया अवलिप्तं प्रदेशम्। अवलेपनमपगतप्रसादः। शान्तसम्भारान् कृत्यया 'कृतव्यधनि' इत्यनयर्चा विध्यति। 'दार्भ्यूषेण भाङ्गज्येन'[4] इत्येवं विधिः। उत्तरत्र दर्शनात्। शान्तसम्भारान् कृत्ययाऽमित्रचक्षुषा समीक्षन् भूमावस्थितया॥ यदि पुनरवलिप्ताभावस्तत्र। उक्तावलेखनीम्॥ १२॥ अवलिप्ताभावे कथिता प्रतिकृतिः कृत्यायाः॥ दूष्या दूषिरसि[5] इति दर्व्या त्रिः सारूपवत्सेनापोदकेन मथितेन गुल्फान् परिषिञ्चति॥ १३॥ ऋ-

१० गेका विधिकर्मत्वात्। कर्म। तिलकदर्व्या सारूपवत्सेनानुदकेन तक्रेण त्रिः परिषिञ्चति कृत्यागुल्फान्। बहुवचनं प्रतिपादं गुल्फद्विवचनात्॥ शकलेनावसिच्य यूषपिशितान्याशयति॥ १४॥ सूक्तेन। शकलेन त्रिः शान्त्युदकेन कृत्यामवसिच्य यूषं पिशितानि चाशयति। मुखे प्रक्षेपार्थमाशयतिवचनम्। यूषपिशिताशने संपाताः। 'दूष्या दूषिरसि'[5] इति सूक्तेन। अस्य प्रकरणात्। अश्नातेश्च प्रयोगात्॥ यष्टिभिश्चर्म पिनह्य प्रैषकृत् परिक्रम्य बन्धान्मुञ्चति संदंशेन॥ १५॥ यष्टिभिर्दीर्घाभिश्च लकुटवन्नानावबद्धचर्मणोः समु-

१५ च्चयो विशेषवचनात्। एकवचनं जात्यभिप्रायम्। प्रैषकृतो विहिताद्धि वचनात्। परिक्रम्य वेधदेशं गत्वा। आयसेन संदंशेन। कृत्याया बन्धान् मुञ्चति प्रैषकृत् हस्तेन॥ अन्यत्पार्श्वीं संवेशयति॥ १६॥ तस्मिंश्चर्मणि कृत्यामधोमुखीं संवेशयति प्रैषकृत्॥ शकलेनोक्तम्॥ १७॥ 'शकलेनावसिच्य यूषपिशितान्याशयति' इत्येतदुक्तम्। उत्तानीकृत्यावसेकस्य ततो दृष्टत्वात्। उक्तवचनस्यैवमर्थवत्त्वात् शयनयोगाच्च॥ अभ्यक्ता[6] इति नवनीतेन मन्त्रोक्तम्॥१८॥ 'अभ्यक्ताक्ता' इति मन्त्रे यदुक्तं तच्च। नवनीतेन मन्त्रोक्तं स्यात्। नवनीतं शकलेन गृही-

२० त्वाञ्जनाभ्यञ्जने कृत्यायाः कुर्वन्ति॥ दर्भरज्ज्वा संनह्योत्तिष्ठैव[7] इत्युत्थापयति॥ १९॥ अधोमुखीमेव दर्भरज्ज्वाऽवबध्नाति। निश्चलां कृत्वा 'उत्तिष्ठैव'[7] इत्यर्धर्चेन प्रैषकृदुत्थापयति। कर्ता प्रैषकृत्॥ सव्येन दीपं दक्षिणेनोदकालाब्वादाय वाग्यताः॥ २०॥ कर्ता सव्येन हस्तेन दीपं गृहीत्वा दक्षिणेन हस्तेन उदकपूर्णमलाबु आदाय उत्थापयति। कर्तृकारयितृप्रैषकृतः॥ तेषाम्। प्रैषकृदग्रतः॥ २१॥ व्रजतीति वाक्यशेषः॥ अनावृतम्॥ २२॥ आवृतिविवर्जितम्। तत्र देशे गच्छेयुः॥ अगोष्पदम्॥ २३॥ यत्र गोष्पदं न स्यात्॥ अनुदकखातम्॥ २४॥ पशुना। उदकेन न

खातः। एतेषां विशेषणानां समुच्चयः ॥ दक्षिणाप्रवणे वा। दक्षिणा यत्र आपः पतिता आगच्छन्ति। स्वयमवदीर्णे वा। न केनचिद्यः खातश्च पूर्वोत्तरविकल्पार्थः। स्वकृते वेरिणे। ऊषरे इत्यर्थः। अन्यशालायां वा निदधाति ॥२५॥ शत्रुक्षेत्रे वा निदधाति कृत्याम्। प्रतिसूत्रम्। वेति सर्वविकल्पार्थः ॥ अलाबुना दीपमवसिच्य यथा सूर्यं[1] इत्यावृत्याऽऽव्रजति ॥ २६ ॥ कृत्यानिधानदेश एव अलाबूदकेन दीपं निषिच्य 'यथा सूर्यो मुच्यते' इ-
५ त्युक्त्वा गच्छति ॥ तिष्ठंस्तिष्ठतो महाशान्तिमुच्चैरभिनिगदति ॥२७॥ तिष्ठन् कर्ता। तिष्ठतां येषामपहृता तांस्तिष्ठतश्च। 'शान्तियुक्तानि'[2] महाशान्तिरिति कथितम्। तेषामभिमुखमुच्चैर्निगदनम्। एकश्रुत्या पठनम्। मर्माणि[3] संप्रोक्षन्ते ॥२८॥ येऽभिचरन्ति ते संप्रोक्षन्ते शान्त्युदकेन। तस्य शमनार्थत्वात् ॥ कृष्णसीरेण कर्षति ॥२९॥ सीरं हलम्। तेन कृष्णवर्णेन कर्षत्यभिचारभुवम्। कार्ष्ण्यं हलस्याङ्गत्वम्। कार्ष्ण्यं षड्गवं तत् 'अधि सीरेभ्यः' इति बहुवचनात्। प्रायश्चित्तेषु च षड्गवसीरदर्शनात्[4] ॥ अधि सीरेभ्यो दश दक्षिणाः ॥३०॥ हलगोभ्यः दश गावोऽधिका दक्षिणा देयाः।
१० अधिग्रहणमधिकरणनिवृत्तेः[5]। दक्षिणावचनं कर्तृसंप्रत्ययार्थम् ॥ अभिचारदेशा मन्त्रेषु विज्ञायन्ते तानि मर्माणि ॥३१॥ संप्रोक्षन्त इत्युक्तम्। तानि कानि। उच्यन्ते। ये देशा मन्त्रेषु श्रूयन्ते 'यां ते चक्रुः'[6] इत्येतेषु तानि मर्माणि देशवचनात्। 'आमपात्रादीनि' इत्युक्तत्वात् देशवचनादुपचर्यन्ते। आमपात्रमिश्रधान्य-मांसकृकवाकु–अजकुरीरि–एकशफोभयादत्–गर्दभामूलानराचीगार्हपत्याहवनीयाः ॥ इति श्रीभट्टदारिलकृतौ कौशिकभाष्ये पञ्चमेऽध्याये तृतीया कण्डिका ॥ ॐ। यददः संप्रयतीः[7] इति येनेच्छेन्नदी प्रतिपद्येतेति प्रसिञ्चन्
१५ व्रजति ॥ १ ॥ 'येन भूमिदेशेन नदी गच्छेत्' इति देशनिर्देशार्थम्। तं देशं भूयसोदकेन प्रकर्षेण सिञ्चन् व्रजेत् कर्ता। प्रायश्चित्तं नगरग्रामाद्यपहारदोषशमनात्। तत्र च खननमर्थात्। उपप्लवनमर्थात्। उपप्लवनदेशो निम्नः। 'यददः संप्रयतीः' इति सूक्तेनोदकाभिमन्त्रणं 'सर्वाण्यभिमन्त्र्याणि'[8] इति वचनात्। सर्वं सूक्तमुत्तरेषां ग्रहणात् ॥ काशदिविधुवकवेतसान्निर्मिनोति ॥ २ ॥ काशः प्रसिद्धः। निमानमुच्छ्रयणं तत्रैव सूक्तम्। सर्वं पूर्ववत्। प्रसिद्धानां निर्देशात् ॥ इदं व आप[9] इति हिरण्यमधिदधाति ॥ ३॥ पादेन। सुवर्णं नदीमुखोपरि स्थापयति ॥ अयं वत्स[10] इ-
२० तीषीकाञ्जिमण्डूकं नीललोहिताभ्याम्। सूत्राभ्याम्। सकक्षं बद्ध्वा ॥ ४ ॥ अधिदधातीति शेषः। प्रकरणात्। अनेन पादेन। इषीकेव अञ्जिः रेखा यस्य स इषीकाञ्जिमण्डूकः। तं नीलेन सूत्रेण च लोहितेन च सह कक्षाभ्यां बद्ध्वा कक्षा प्रसिद्धा। हिरण्यस्योपरि दधाति ॥ इहेत्थम्[11] इत्यवकया प्रच्छादयति ॥ ५ ॥ अवका शेपबालः। तेन मण्डूकं प्रच्छादयति। पादेन ॥ यत्रेदम्[12] इति निनयति ॥ ६ ॥ पादेन। तदुदकं निनयति प्रवर्तयति ॥ मारुतं क्षीरौदनं मारुतशृतं मारुतैः परिस्तीर्यं मारुतेन स्रुवेण मारुतेनाज्येन वरुणाय त्रिर्जुहोति ॥ ७ ॥ उक्तमुपमन्थनम् ॥ ८ ॥ दधिमन्थं बलिं हृत्वा संप्रोक्षणी-

भ्यां प्रसिञ्चन् व्रजति ॥९॥ 'येनेच्छन् नदी प्रतिपद्येत'[1] मारुतं मन्त्रमुक्त्वा। मारुताभिधा गौः इति मारुतत्वं कृष्णाया गोः। गौः कृष्णवत्सा। तस्याः पयसि शृतं वैतसैः काष्ठैः। तदाज्येन। वैतसे चमसे उपमन्थनम्[2]। ते च उपमन्थन्यौ यथान्तरत्वात्[3]। उपमन्थक्रियामात्रं हि न द्रव्यम्। उपमन्थनीभ्याम्। दधिमन्थ एव बलिः। वरुणाय बलिहरणम्। 'अति धन्वानि'[4] इति संप्रोक्षण्योर्निवेशनत्वात्। तत्रैव प्रतिपादनदेशे दधिमन्थशेषः। 'उक्त' प्रयोगयोगादन्यवच-
५ नच्च। 'येनेच्छन् नदी प्रतिपद्येतेति प्रसिञ्चन् व्रजति'[1]। प्रसेकशेषस्य निनयनं 'अति धन्वानि'[4] इति द्वाभ्याम्। निवेशनत्वात् ॥

पाणिना वेत्रेण वा प्रत्याहृत्योपरि निपद्यते ॥ १० ॥ पाणिना आहृत्योदकं वहत् प्रतीपमाहृत्य। वेत्रयष्ट्या वा प्रत्याहृत्य। उदकस्योपरि निपद्यते। मञ्चके इवारुह्य इतरेण प्लवते ॥ अयं ते योनिः[5] इत्यरण्योरग्निं समारोपयति ॥ ११ ॥ 'अयं ते योनिः' इत्यग्नेः समारोपणम्। प्रतापनेनेह विधानं प्रायश्चित्त-
१० त्वात्। एका ऋक्। कल्पजावत् ॥ मारुतं कर्म प्रति। इह कर्माधिकृते। आत्मनि वा ॥ १२ ॥ समारोपयतीति शेषः। आत्मनि शरीरे ॥ उपावरोह... इत्युपावरोहयति ॥ १३ ॥ कार्यकाले समीपे अवरोहणम्। अग्नावेव शरीरे समारोपणे। अरणिसमारोपणे तु मन्थनम्। अवरोहणम् ॥ यां त्वा गन्धर्वो अखनत्[6] वृषणस्ते खनितार...[7] इति। कल्पजा। उच्छुष्मापरिव्याधावायसेन खनति ॥ १४ ॥ उच्छुष्मा कपिकच्छुः। परिव्याधः सूकरबालकः। आयसेन फालेन खनति मूलानि। कल्पसाधनत्वात्। सूक्ताद्यया खननं कल्पजया च। सवाग्निमन्थनाधिकारः[8]। पाने सू-
१५ क्तमधिकारश्च इतिवचनात्। खननमन्त्रनिवृत्तिः। शेषमन्त्राणां न कालकर्मत्वात्। प्रायश्चित्तत्वं शेषमन्त्राणां संक्षयदोषनाशनत्वात् ॥ दुग्धे फाण्टावधिज्योपस्थ आधाय पिबति ॥ १५ ॥ फाण्टश्च फाण्टा च फाण्टौ। 'पुमान् स्त्रिया'[9] इत्येकशेषः। उच्छुष्मापरिव्याधौ इति द्वन्द्वः। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः'[10] इति पुँल्लिङ्गवदिह। फाण्टं चूर्णमिति केचित्। प्रकरणात् ॥ मयूखे मुसले वाऽऽसीनः। कीलके वोपविष्टो मुसले वोपविष्ट इति। यथासित[11] इत्येकार्कसूत्रमार्कं बध्नाति ॥ १६ ॥ ग्रामे नगरे वा एकार्क एवार्कः। तस्य वल्कलसूत्रेण तद्विकारमार्कं ब-
२० ध्नाति। शेपस्य वृद्धिः मन्त्रलिङ्गात्[12] तस्याश्च पुंस्त्वाश्रयत्वात् ॥ यावदङ्गीनम्[13] इत्यसितस्कन्धमसितवालेन ॥ १७ ॥ क्रमभेदश्च विशेषसामान्यात्। बध्नातीति वाक्यशेषः। अनया हस्तिनः कुम्भं तस्यैव हस्तिनः वालेन बध्नाति। सर्पोऽसित इति केचित् ॥ आ वृषायस्व[14] इत्युभयमप्येति ॥ १८ ॥ एकार्कमणिः स्कन्धमणिश्चैतदुभयमप्यस्य भवति। क्रमभेदः प्रकृतकर्मसामान्यात् ॥ इति श्रीभट्टदारिलकृतौ कौशिकभाष्ये पञ्चमेऽध्याये चतुर्थी कण्डिका ॥ ॐ। समुत्पतन्तु[15] प्र नभस्व[16] इति वर्षकामो द्वादशरात्रमनुशुष्येत् ॥ १ ॥

यो वर्षं कामयेत् स द्वादशाहानि अनुशुष्येत् । त्र्यहं प्रातस्त्र्यहं सायमित्येव । पश्चात् शुष्येत् 'अनु'अस्योपपत्तेः । न-
नु च कृच्छ्रग्रहणमेव कार्यं लघुत्वात् । न । पराकादिप्रसङ्गात्[1] ॥ सर्वव्रत उपश्राम्यति ॥ २ ॥ सर्वेभ्यः निवृत्तः स-
र्वव्रतः । प्रधानकालेऽपि 'उप'प्रयोगात् । श्राम्यति । श्रमु तपसीति[2] शब्दविधिस्मृतेः । तप्यत इत्यर्थः । प्राप्त-
निवृत्तिः सर्वव्रतलोपप्रसङ्गात् । उपश्राम्यति इति च 'शक्त्या वा'[3] उपपद्यते । इह काम्यविधिः । विधिकर्म ।
५ अवर्षणनिवृत्त्यर्थत्वात् । तस्माद्वर्षाकाल एवास्य प्रयोगः ॥ मरुतो यजते यथा वरुणम् । मरुद्भ्यः या-
गं कुर्यात् । यथा वरुणमिति कर्तव्यातिदेशः । पुनरुक्त इति यथा । सूक्तस्य त्रिरभ्यासः । पञ्चभिः प्रथमौ हो-
मौ तृतीयः षड्भिरेव 'समुत्पतन्तु'[4] इत्यनेन । 'मारुतं क्षीरौदनम्...'[5] इत्येवमाद्यतिदेशः । दर्भमुष्टिपरिभोज-
नीयाः । यथाप्रकृति[6] दर्भाणाम् । एवं 'परिस्तीर्य' इति वचनात् । जुहोति ॥ ३ ॥ मारुतमाज्यम् । अन्यतरेण सूक्तेन ॥ ओष-
धीः संपातवतीः प्रवेश्याभिन्युब्जति ॥ ४ ॥ चित्याद्याः संपातवतीः कृत्वा प्रवेशयति उदकमध्ये । तत्राभिमुख्येन नी-
१० चैरुब्जति प्रवेशयति ॥ विप्लावयति ॥ ५ ॥ उदकान्त एव नाना क्षिपत्योषधीः ॥ श्वशिरएडकशिरः[7]-
केशजरदुपानहं वंशाग्रे प्रबध्य योधयति ॥ ६ ॥ शुनः शिरः । मेषस्य शिरः । केशाः प्रसिद्धाः । जीर्णोपा-
नहौ च । वंशाग्रे प्रबध्य एतानि पञ्च । आकाशमाहन्ति । समुच्चय एकवद्भावात् । समासनिर्देशोऽयं शिरसोः क्रिया-
न्तरानिर्देशात् ॥ उदपात्रेण संपातवता संप्रोक्ष्यामपात्रं त्रिपादेऽश्मानमवधायाप्सु निदधाति ॥ ७ ॥ उदकपूर्णे पा-
त्रमन्यतरेण सूक्तेन संपातवत् कृत्वा तेनापक्वं घटादि संप्रोक्ष्य त्रिपादे शिक्येऽवलम्ब्य पाषाणमामपात्रे प्रक्षिप्य
१५ तत्सर्वमप्सु निदध्यात् । निधाने मन्त्रः । उदपात्रस्य मन्त्रवन्निधानम् । तस्य च मन्त्रसंस्कृतगुणत्वात् । उदपात्रेणेति
हस्तप्रसङ्गात् ॥ अयं ते योनिः[8] आ नो भर[9] धीती वा[10] इत्यर्थमुत्थास्यन्[11] उपदधीत ॥ ८ ॥ अर्थार्थमीहमानः हवि-
षामन्यतममुपदधीत[12] । उत्तिष्ठतेः ईहार्थत्वसंप्रत्ययात् । प्रायश्चित्तत्वं प्रसिद्धं हि दोषशमनत्वात् । 'उदोऽनू-
र्ध्वकर्मणि'[13] इत्यात्मनेपदम् ॥ जपति ॥ ९ ॥ अथ च अन्यतमं जपति । 'अम्बयो यन्ति'[14] इत्यस्यानुक्तस्य विधानम् ।
कस्मात् । अवसेचनस्यार्थोत्थापनेन योगः क्रमभेदात् ॥ पूर्वास्वषाढासु गर्तं खनति ॥ १० ॥ द्यूतशाला-
२० यां गर्तं खनति । पूर्वेति ग्रहणमन्तिमनिवृत्त्यर्थम् ॥ उत्तरासु संचिनोति ॥ ११ ॥ उत्तरास्वषाढासु स्थूणां गर्ते
सुष्ठु प्रक्षिपति ॥ आदेवनं संस्तीर्य ॥ १२ ॥ द्यूतशालां छादयित्वा ॥ उद्भिन्दतीं संजयन्तीं[15] यथा वृक्षमश-
निः[16] इदमुग्राय[17] इति वासितानक्षान् निवपति ॥ १३ ॥ अक्षान् बिभीतकान् । न्युप्तत्वात् कालनियमाभावः । नन्वत्र
वासनसंयोगात् दधिमधुनि वासनं[18] यथान्तरत्वात्[19] । 'उद्भिन्दतीं' इति क्रमभेदे 'वैश्वानरो रश्मिभिः'[20] इत्यस्या-

बधितो नैमित्तिकमवशिष्यते। यथाऽमुष्य संहिताक्रममात्रग्रहणम्। 'यथा द्यौः'[1] इति गोदाने[2] पठितम्। द्यूतप्रतिषेधातिक्रमः। दोषनाशात् प्रायश्चित्तत्वम्। द्यूतेनार्थमुत्थास्यमानस्य ॥ अम्बयो यन्ति[3] शंभुमयोभू[4] हिरण्यवर्णा[5] यददः[6] पुनन्तु मा[7] सस्रुषीः[8] हिमवतः प्रस्रवन्ति[9] वायोः पूतः पवित्रेण[10] शं च नो मयश्च नो[11] अनडुद्भ्यस्त्वं प्रथमम्[12] मह्यमापो[13] वैश्वानरो रश्मिभिः[14] इत्यभिवर्षणावसेचनानि ॥ १४ ॥ अभिवर्षणफलवत्त्वादभिवर्षणानि 'समुत्पतन्तु'[15] इत्यस्य यानि कर्माणि विहितानि। अवसेचनमुदकेनाप्लावनम्। अवसेचनफलमर्थोत्थापनाधिकारात्। प्रतीकानां विकल्पः ॥ उत्तमेन वाचस्पतिलिङ्गाभिरुद्यन्तमुपतिष्ठते ॥ १५॥ वाचस्पतिलिङ्गाभिः 'पुनरेहि वाचस्पते'[16] इति वाचस्पतिलिङ्गात्। 'वाचस्पते पृथिवी नः स्योना'[17] इति लिङ्गसमवायग्रहणम्। दोषप्रशमात् प्रायश्चित्तत्वम् ॥ स्नातोऽहतवसनो निक्त्वाऽहतमाच्छादयति ॥ १६ ॥ नवं वासः प्रक्षाल्य स्नातः आच्छादयति ॥ ददाति ॥ १७ ॥ यथा मांसम्[18] इति वननम् ॥ १८ ॥ गोवत्ससंभजनफलं कर्मेत्यर्थः ॥ वत्सं संधाव्य गोमूत्रेणावसिच्य। 'उदकेन' शब्दलोपः। त्रिः परिणीयोपचृतति ॥ १९ ॥ त्रिष्कृत्वो गोः समीपे बध्नाति। उपचर्तने सूक्तं प्रधाननिर्देशात् ॥ शिरःकर्णमभिमन्त्रयते ॥ २० ॥ गोः शिरःकर्णाभिमन्त्रणवचनम् ॥ वातरंहा[19] इति स्नातेऽश्वे संपातानभ्यतिनयति ॥ २१ ॥ अभ्यातानान्ते स्नापयत्यश्वम्। तत उदपात्रे संपातानानयति 'वातरंहा' इति सूक्तेन ॥ पलाशे चूर्णेषूत्तरान् ॥ २२ ॥ पलाशवृक्षपर्णावस्थितेषु सुरभिचूर्णेषूत्तरान् संपातान् ॥ आचमयति ॥ २३ ॥ आप्लावनादाचमनं प्राप्तं प्रथमं विधीयते ॥ आप्लावयति ॥ २४॥ तेनोदपात्रेणाश्वम् ॥ चूर्णैरवकिरति ॥२५॥ त्रिः एकया च[20] इति ॥ २६॥ चूर्णैरवकिरत्यश्वं त्रिः 'एकया च दशभिश्च'[20] इति। अश्वस्य विधिकर्मेदम्। 'अर्थमुत्थास्यन्'[21] इति प्रकरणात् ॥ इति भट्टदारिलकृतौ कौशिकभाष्ये पञ्चमेऽध्याये षष्ठी कण्डिका ॥ ॐ। भद्रादधि[22] इति प्रवत्स्यन्नुपदधीत ॥ १ ॥ अर्थमीहमानः प्रवत्स्यन्ननया हविषामन्यतमं जुहुयात् ॥ जपति ॥ २ ॥ अथ च जपति एतामेव ॥ यानं संप्रोक्ष्य विमोचयति ॥३॥ येन गच्छत्यर्थार्थे तदद्भिः संप्रोक्ष्य विमोचयति। यत्र यत्र विमोचयति प्रैषकृत् तत्र तत्रैवम् ॥ द्रव्यं संपातवदुत्थापयति ॥ ४ ॥ विक्रेयं द्रव्यमप्रतिषिद्धम्। द्रव्यग्रहणमविक्रेयनिवृत्त्यर्थम्। प्रैषकृत्कर्त्रोरुत्थापनमिति विक्रयार्थं नयनम् ॥ निर्मृज्योपयच्छति[23] ॥ ५ ॥ क्रीतं द्रव्यं सुष्ठु शोधयित्वा स्वीकुर्यात्। स्वीकरणे मन्त्रः प्रधाननिर्देशात् ॥ उभा जिग्यथुः[24] इत्यार्द्रपाणिपादाभ्यां सांमनस्यम् ॥ ६ ॥ एकया। आर्द्रे पाणिपादे[25] ययोस्तावार्द्रपाणिपादौ। ताभ्यां प्रयच्छति पण्यमिति शेषः ॥ यानेन प्रत्यञ्चौ ग्रामान् प्रतिपाद्य प्रयच्छति ॥ ७ ॥ यानेन पश्चान्मुखौ द्वौ प्रतिपादयति। सांमनस्यं बहूनामपि भवति। अर्थोत्थापनप्रकरणादिह सांमनस्यवचनम्। सह वाणिज्येन कलहो न स्यादिति सांमनस्यवचनम्। यानस्य[26] संपातवत्त्वमनारभ्यवादात् ॥

आयातः समिध आदाय ऊर्जं बिभ्रत्[1] इत्यसंकल्पयन्नेत्य सकृदादधाति ॥ ८ ॥ प्रत्यागच्छन् पथि याः समिधस्ता गृहीत्वा 'ऊर्जं बिभ्रत्' इति सतर्चेन न संकल्पयन् गृहविशेषं साधारणे देशे सकृदादधाति । प्रत्यृचं न । प्रतिवाणिज्यमुत्तमपुरुषप्रयोगेऽपि त्रैवर्णिका एव ॥ ऋचं साम[2] इत्यनुप्रवचनीयस्य[3] जुहोति ॥ ९ ॥ अनुप्रवचनीयो वेदार्थाभिज्ञ इत्यर्थः । तस्येदं कर्म । 'ऋचं साम' इति द्वाभ्याम् । प्रत्यृचं होमाः[4] । आज्येन[5] च जुहोति ॥ युक्ताभ्यां तृतीयाम् ॥ १० ॥

५ युक्ताभ्यामृग्भ्यां तृतीयामाहुतिं जुहुयात् । अतश्च पूर्वे आहुती प्रत्यृचम् ॥ आनुमतीं चतुर्थीम् ॥ ११ ॥ इत्यत्र आनुमत्या विधिः । 'अनुमतये स्वाहा'[6] इति वा ॥ समावर्तनीयसमापनीययोश्चैषेज्या ॥ १२ ॥ समावर्तनमर्हति यो ब्रह्मचारी स समावर्तनीयः । वेदार्थाभिज्ञ इत्यर्थः । समापनमर्हति यः स समापनीयः । सम्यगध्येता अनुप्रवचनस्य इत्यर्थः । तयोरुभयोरपि एषैव क्रिया कार्या । विशेषस्तु इज्या । याग इत्यर्थः । वरुणयागवत्[7] । 'दर्शपूर्णमासाभ्यां पाकयज्ञाः'[8] इत्यतिदेशवचनात् । अव्यक्तचोदनाधर्म-

१० त्वं देवताभावात् । समावर्तनस्य नित्यत्वे समापनीयसमावर्तनीययोरिति युक्तं वक्तुं कल्पान्तरत्वात् । बह्वक्षरस्य[9] पूर्वनिपातः वचनान्तरं मा भूत् अधिकारसंप्रत्ययात् । अतश्च समावर्तनीयं समापनीयवत् । न चात्र मान्त्रवर्णिकी देवता मन्त्रवर्णो यत्र । जुहोतीत्यादौ देवतानभिधानादानर्थक्यप्रसङ्गात् । यागाभावो देवताभावादिति चेत् । मन्त्रोच्चारणे तद्योगात् । सपुनरुक्तं मन्त्रब्राह्मणमधीत्य परिमोक्षं कामयेत[10] । 'वेदमधीत्य स्नायात्'[11] इति च ॥ अपो दिव्य[12] इति पर्यवेतव्रत उदकान्ते शान्त्युदकमभिमन्त्रयते ॥ १३ ॥ पर्यवेतव्रतः परि-

१५ समाप्तब्रह्मचर्यव्रतः । ततश्च शिरोव्रतपरिसमाप्तौ परिमोक्षः । उदकसमीपे वपनार्थे शान्त्युदकमभिमन्त्रयते । शिरोव्रतं परिभाषासिद्धम्[13] । उदकान्तवचनं गोदाने बहिर्वचनात्[14] उदकान्तनिवृत्तिप्रसङ्गात् । संप्रोक्षणान्ते अनुमन्त्रणमन्यकर्तृत्वात् ॥ अस्तमिते समित्पाणिरेत्य तृतीयावर्जं समिध आदधाति ॥ १४ ॥ इह विधौ न मन्त्रः प्रकरणात् । 'एत्य' इति वचनात् परिमोक्षाङ्गं समिदाधानम् ॥ इदावत्सराय इति व्रतविसर्जनमाज्यं जुहुयात् ॥ १५ ॥ समिधोऽभ्यादध्यात् ॥ १६ ॥ पर्याधाना-

२० न्ते 'पार्थिवस्य[15] मा प्र गाम'[16] इति जपित्वा अभ्यातानानि हुत्वा । इदावत्सराय... । इत्यादिभिः कल्पजाभिः चतसृभिराज्यं जुहुयात् । आज्यग्रहणमविधिकर्मत्वात् । व्रतविसर्जनग्रहणं सर्वव्रतसमाप्तौ यथा स्यात् । समिधां चाभ्याधानम् । व्रतविसर्जनीः इति प्रकरणात् । बहिरेव मन्त्रैः । समिद्ग्रहणमविधिकर्मत्वात् । संहितायामभावान्मन्त्रपाठः ॥ व्रतसमापनीरादधाति ॥ १७ ॥ समिध इति संनिधानात् । व्रतं समाप्य तत्र । व्रतादानीयाः[17] कारकान्तरयोगात्[18] । व्रतमार्षमित्येवाधिकारात् । ताश्च वेदव्रते उपनयने ।

अभ्यातानाद्युत्तरतन्त्रम्। 'सवान् दास्यतोऽग्नीनाधास्यमानः पर्यवेतव्रतदीक्षिष्यमाणानाम्'[1]। अतः परं 'अस्तमिते समित्पाणिरेत्य तृतीयावर्जं समिध आदधाति'[2] इति समिदाधानमुक्तम्। उदकान्त[3] इति पारिभाषिको विधिः॥ अतः परम्। त्रिरात्रमरसाशी स्नातव्रतं चरति ॥ १८ ॥ प्रथमादह्न आरभ्य त्रीण्यहानि रसवर्जमश्नाति लवणरहितम्। नेतरे रसा विध्यभावात्। स्नातको व्रतेन भवतीति स्नातकव्रत इति परिमुक्तः[4] ॥ निर्लक्ष्म्यम्[5]

५ इति पापलक्षणाया मुखमुक्षत्यन्वृचं दक्षिणात् केशस्तुकात् ॥ १९ ॥ या स्त्री पापलक्षणा। अनिष्टफलसूचकं चिह्नं यस्याः सा पापलक्षणा। दुर्भगेति केचित्। तस्या मुखं सिञ्चत्युदकेन। दक्षिणात् केशपुञ्जादारभ्य 'निर्लक्ष्म्यम्' इति सूक्तेनान्वृचम्। सूक्तक्रमभेदः अर्थोत्थापनाधिकारनिवृत्त्यर्थः। तस्माद्धर्मतः रक्षणफलमिदं कर्म। अहोमत्वाद् 'अन्वृचं' वचनम्॥ पलाशेन फलीकरणान् हुत्वा शेषं प्रत्यानयति ॥ २० ॥ फलीकरणाः कुकूलाः[6]। पलाशपत्रेण फलीकरणान् जुहोति प्रकृतेन सूक्तेन। अभ्यातानान्ते नित्यं तन्त्रमहस्तादि-

१० होमत्वात्[7]। हुत्वा शेषं प्रत्यानयति। पलाशपत्रेणैव तुषान् जुहोति। शेषं प्रत्यानयति। एवमेव बुसस्य होमः। प्रत्यानयनम्। एवमेवावतक्षणहोमः। प्रत्यानयति। चतुः सूक्तस्यावृत्तिः द्रव्यभेदात्॥ फलीकरणतुषबुसावतक्षणानि। तान् शेषान् पापलक्षणायाः। सव्यायां पादपार्ष्ण्यां निदधाति ॥ २१ ॥ प्रक्षिपति। फलीकरणानां च नियमेन पुनर्ग्रहणात् तुषादीनामपि होमसंयोगः। प्रत्यानीतस्य निधानं प्रतिपत्तिरन्यकर्मवचनात्। फलीकरणानां तु होमप्रत्यानयने प्रदर्शनार्थम्॥ अपनोदनापाघाभ्या-[8]

१५ मन्वीक्ष्यान् प्रतिजपति ॥२२॥ 'आरेऽसौ'[8] इत्यपनोदनम्[9]। 'अप नः शोशुचदघम्'[10] इत्यपाघम्। प्रतीकविकल्पः अपनोदनक्रमविधानात्। तृतीया करणत्वात्[11]। अन्वीक्ष्याः श्वित्रकुष्ठिकसकण्डुकाण्डवृद्धादयः। अधर्मलिङ्गत्वात् यस्य च स्मृतौ प्रतिषिद्धमीक्षणम्॥ दीर्घायुत्वाय[12] इति मन्त्रोक्तं बध्नाति ॥ २३ ॥ जङ्गिडं मणिम्। जङ्गिडो अर्जुनः। पिशाचचातनं मन्त्रलिङ्गत्वात्[13] ॥ इति भट्टदारिलकृतौ कौशिकभाष्ये पञ्चमेऽध्याये षष्ठी कण्डिका ॥ ६ ॥ ॐ। कर्शफस्य[14] इति पिशङ्गसूत्रमरलुदण्डं यदायुधम् ॥ १ ॥ पिशङ्गं कपिलावर्णवद्वर्णं

२० दोरकं स्यात्। अरलुक इति प्रसिद्धाभिधानः। पिशाचनाशनं दण्डं विमृज्य धारयति। भूदण्डः अरलुकः। 'दण्डं संपातवन्तं विमृज्य धारयति'[15] इत्येकदेशग्रहणात्। यदायुधं धारयति तत् संपातवत् विमृज्य धारयति। विष्कन्धदूषणम् ॥ फलीकरणैर्धूपयति ॥ २ ॥ विष्कन्धधूपनम्। धूपने मन्त्रः। फलीकरणाः कथिताः। मन्त्रनिगमात् दोषनाशनम्॥ अति धन्वानि[16] इत्यवसाननिवेशनानुचरणनिनयनेज्याः ॥ ३ ॥ 'अति धन्वानि' इति द्व्यृचम्। 'इहैव ध्रुवाम्'[17] इत्यष्टभिर्धारयति। 'अति धन्वानि' इति कस्मात्। उच्यते। इज्यायाः वशाश-

मनार्थत्वात् । एवं स्थिते निनयनानुचरणयोर्यथासङ्ख्यत्वम् । अवसानं निधानदेशः । निवेशनं गृहम् ।
अवसाने अनुचरणम् । निवेशने निनयनम् । अनुचरणं शान्त्युदकेन संप्रोक्षणम् । निनयनमुदकाऽऽवर्जनम् । इज्यायाः
श्येनदेवता मन्त्रलिङ्गात्[1] । एवमस्य सूक्तस्य प्रयोगो गृहस्थाने श्येनेनेज्या । 'अति धन्वानि'[2] इति द्वाभ्यां होमः ।
पाकयज्ञतन्त्रम् ॥ वास्तोष्पतीयैः कुलिजकृष्टे दक्षिणतोऽग्नेः संभारमाहरति ॥४॥ उत्तरतस्तन्त्राग्नेः । 'इहै-
५ व ध्रुवाम्'[3] 'एह यातु'[4] 'यमो मृत्युः'[5] 'सत्यं बृहत्'[6] इत्यनुवाको वास्तोष्पतीयानि[7] । एभिः सर्वैर्व्रीहियवौषधिस्थूणा-
दिसंभारानभिमन्त्र्य स्थापयति । संभारग्रहणं संभारधर्मलाभात् । अग्नेर्दक्षिणतः कुलिजेन क-
र्षति । तत्र संभारान् निदधाति ॥ वास्तोष्पत्यादीनि महाशान्तिमावपते ॥ ५ ॥ 'इहैव ध्रुवाम्' इत्यादीनि प-
ञ्च गणा मातृप्रभृतीनि गणा आवपनार्थम् । 'नडमा रोह'[8] इत्यनुवाकं महाशान्तिमावपते । 'इहैव ध्रुवाम्' इत्या-
दीनि वास्तोष्पत्यादीन्यतश्चासमाम्नातानामपि गणत्वम् । चतुर्णां तु नित्यत्वात् ग-
१० णपाठे असमाम्नातान्यपि वास्तोष्पत्यादीनि मातृप्रभृतीनि ग्रहीतव्यानि । महाशान्तिमावपते शा-
न्त्युदके । शान्त्युदकस्योत्तरतन्त्रवचनात् ॥ मध्यमे गर्ते दर्भेषु व्रीहियवमावपति ॥ ६ ॥ प्रधानस्थूणा-
गर्ते व्रीहीन् यवांश्चावपति दर्भाणामुपरि ॥ शान्त्युदकशष्पशर्करमन्येषु ॥ ७ ॥शान्त्युदकं
विरूढं शर्कराश्चावपति ॥ इहैव ध्रुवाम्[3] इति मीयमानामुच्छ्रीयमाणामनुमन्त्रयते ॥८॥ 'इहैव ध्रुवाम्' इति मध्य-
मस्थूणामुच्छ्रीयमाणामनुमन्त्रयते ॥ अभ्यज्य । घृतेन मन्त्रलिङ्गात् । ऋतेन[9] इति मन्त्रोक्तम् ॥ ९ ॥ वंशमारोपयति ए-
१५ तं मन्त्रोक्तमेकया ॥ पूर्णं नारी[10] इत्युदकुम्भमग्निमादाय प्रपद्यन्ते ॥१०॥ 'पूर्णं नारी' इत्येकया उदकपूर्णं घटं गृ-
ह्णाति । उत्तरया[11] अग्निम् । ताभ्यामग्रस्थिताभ्यां सर्वाणि मानुषाणि गृहं प्रविशन्ति । एकैका अङ्गकर्मत्वात् । अ-
त एवाविधिकर्मत्वम् ॥ ध्रुवाभ्यां[12] दृंहयति ॥११॥ ध्रुवाभ्यामृग्भ्यां दृंहयति ध्रुवां दृढां करोति ॥ शंभुमयो-
भुभ्यां[13] विष्यन्दयति ॥१२॥ सूक्ताभ्यां समुच्चिताभ्यामुदकेन क्लेदयति गृहभुवम् ॥ वास्तोष्पते प्रति जानीहि...[14]
अनमीवो वास्तोष्पते ...[15] इति द्वाभ्याम् । वास्तोष्पतये क्षीरौदनस्य जुहोति ॥१३॥ व्यक्तचोदनाचोदितत्वात्
२० सर्वधर्मातिदेशः । एतदन्तमेकं कर्म । अत्र 'अति धन्वानि'[2] इत्युदपात्रस्य निनयनम् ॥ सर्वान्नानि ब्राह्मणान् भोज-
यति ॥१४॥ यावन्ति शक्यन्ते कर्तुं तावन्त्यन्नानि ब्राह्मणान् भोजयति गृही । ब्राह्मणग्रहणं गृहजनस्य मा
भूत् ॥ मङ्गल्यानि ॥१५॥ वाचयति ब्राह्मणान् स्वस्तिवाचनं बहुधान्य-बहुपुत्र-आयुष्य-वर्चस्येत्यादि । बा-
लादारकादीनपि वाचयेयुः वृद्धाः ॥ ये अग्नय[16] इति क्रव्यादुपहत[17] इति पालाशं बध्नाति ॥ १६ ॥ जुहो-
ति ॥१७॥ अथ चात्रैव विमिते जुहोत्याज्यम् ॥ आदधाति ॥१८॥ अत्रैव ॥ उदञ्चनेनोदपात्र्यां यवानद्भिरा-

नीयोल्लोपम् ॥१९॥ उदश्चनो लोटकः अजहल्लिङ्गम्। पात्र्यामुदकं कृत्वा यवानद्भिः सह पात्र्यामुदकमानीय उल्लोप-
मालोड्य पात्र्यां यवान् जुहोति ॥ क्रव्यादुपहत इत्येव। ये अग्नय[1] इति पालाश्या दर्व्या मन्थमुपमथ्य काम्पीली-
भ्यामुपमन्थनीभ्याम् ॥२०॥ पूर्वत्रैव विमिते। प्रतीकग्रहणं सूक्तार्थम्। काम्पीलीभ्यामुपमन्थनीभ्यामुदकसक्तुमुपमथ्य
पालाश्या दर्व्या जुहुयात् प्रत्यृचम्। पालाश्या दर्व्या इति व्यवधानमुपमन्थनेऽपि सूक्तप्रत्ययार्थम्। तस्मात् सूक्तेनोप-
५ मन्थनम् ॥ शमनं च ॥२१॥ अतश्च अनुमन्त्रणेन शमनं वशायाः। अतश्चार्थतस्तस्य विनियोगः शान्तत्वा-
त् ॥ इति भट्टदारिलकृतौ कौशिकभाष्ये पञ्चमेऽध्याये सप्तमी कण्डिका ॥७॥ ॐ। य आत्मदा[2] इति व-
शाशमनम् ॥१॥ वक्ष्याम इति शेषः। वशा गौर्या गर्भं न गृह्णाति। तस्या दोषशमनार्थम्। पाकयज्ञिकं तन्त्रम्। आ-
ज्यभागान्ते ॥ पुरस्तादग्नेः प्रतीचीं धारयन्ति ॥२॥ पूर्वस्मिन् देशे[3] अग्नेः पश्चान्मुखीं धारयन्ति प्रैषकृतः ॥ पश्चाद-
ग्नेः प्राङ्मुख उपविश्यान्वारब्धायै शान्त्युदकं करोति ॥ ३ ॥ तन्त्राग्नेः पश्चिमे देशे[4] उपविशति। वशानयना-
१० दुपविश्येति वचनम्। अन्वारब्धायै शान्त्युदकं करोति। द्रव्यान्तरेणान्वारम्भणं सामर्थ्यात् ॥ तत्रैतत्सू-
क्तमनुयोजयति ॥४॥ तस्मिन् शान्त्युदके एतद् 'य आत्मदा' इति ॥ तेनैनामाचामयति च संप्रोक्षति च ॥५॥ ते-
न शान्त्युदकेनैतां न कारयितारम्। आचामयति संप्रोक्षति च ॥ तिष्ठंस्तिष्ठन्तीं महाशान्तिमुच्चैरभिनिगदति ॥ ६ ॥
तां तिष्ठन् ऊर्ध्वोऽवस्थितस्तिष्ठन्तीं वशां कृत्वा महाशान्तिमुच्चैः प्रकर्षेण। अभिनिगदनमेकश्रुत्या ॥ य ईशे पशुप-
तिः पशूनाम्[5] इति हुत्वा वशामनक्ति शिरसि ककुदे जघनदेशे ॥ ७ ॥ 'य ईशे' सूक्तम्। पशुपतिग्रहणमनर्थकमे-
१५ कविषयत्वात्। एवं तर्हि यजमानः स्यान्मन्त्रलिङ्गात्। तन्निवृत्त्यर्थं वशाग्रहणम् ॥ अन्यतरां स्वधि-
तिधारामनक्ति ॥ ८ ॥ उभयधारायाः छुरिकायाः अन्यतरां धारां प्रलिम्पति ॥ किमर्थोऽयं संस्कारः। उच्यते।
अक्तया वपामुत्खनति ॥ ९ ॥ प्रलिप्तया धारया वशायाः वपामुद्धरति। इह वचनमञ्जनप्रयोगक्रमार्थम् ॥
दक्षिणे पार्श्वे दर्भाभ्यामधिक्षिपत्यमुष्मै त्वा जुष्टमिति यथादेवतम् ॥ १० ॥ वशां दक्षिणे पार्श्वे दर्भाभ्यामाह-
न्ति। 'प्रजापतये त्वा जुष्टमधिक्षिपामि' इति ॥ निःसालाम्[6] इत्युल्मुकेन त्रिः प्रसव्यं परिहरत्यनभिप-
२० रिहरन्नात्मानम् ॥ ११ ॥ वशां परिहरति। प्रसव्यमात्मनो वशायाश्चान्तरेण[7] उल्मुकहरणं 'निः-
सालाम्' इति सूक्तेन। इह सर्वत्र सूक्तसंप्रत्ययात् समानलिङ्गत्वाच्च। अस्य वा सूक्तस्य संप्रत्ययात् प-
रिहार्यं वशां संस्कार्यत्वात् ॥ दर्भाभ्यामन्वारभते ॥ १२ ॥ शामित्रदेशं नीयमानां पश्चादवस्थितो
दर्भाभ्यां स्पृशति परिभोजनीयाभ्याम् ॥ पश्चादुत्तरतोऽग्नेः प्रत्यक्शीर्षीमुदक्पादीं निविध्यति ॥ १३ ॥

पश्चादुत्तरत इति कोणाभिप्रायम् । अग्नेः पश्चिमोत्तरकोणे पश्चिमशिरसमुदक्पादां वशां पातयन्ति ॥ स-
मस्यै तन्वा भव इत्यन्यतरं दर्भमवास्यति ॥ १४ ॥ याभ्यां दर्भाभ्यां वशा अन्वारब्धा तयोरन्यतरः । तेन दर्भविधिः कार्यः । व-
शायाः अधः क्षिपति । अवशब्दो निव्यधनादूर्ध्वं च पाठक्रमात् ॥ अथशब्दस्य क्रमार्थत्वात् । अथ प्राणा-
नास्थापयति प्रजानन्त [1] इति ॥१५॥ दर्भावासनानन्तरं प्राणानस्या आस्थापयति प्राणान्निरुणद्धि । 'संज्ञप्तायां
५ जुहोति' इति वचनात् । अन्यस्यास्थापनं न कर्तुः । प्रयोगात् । प्रयोगस्य मन्त्रसंबन्धः प्रधानकर्तृत्वात् ॥ द-
क्षिणतस्तिष्ठन् रक्षोहणं जपति [2] ॥ १६ ॥ मार्यमाणाया दक्षिणत ऊर्ध्वः सन् रक्षोहणमनुवाकं जपति । अनुवा-
कश्च समाख्यानात् । 'अध्यायानुवाकयोर्लुक्' [3] इति वचनात् । संज्ञप्यमानायाम् ॥ संज्ञप्तायां जुहोति यद्व-
शा मायुम्...[4] इति ॥ १७ ॥ आज्येन । होमः वशाशब्दभावात् ॥ उदपात्रेण पत्न्यभिव्रज्य मुखादीनि गात्राणि
प्रक्षालयति ॥१८॥ उदपात्रेण न हस्तेन । पत्नी कर्ता । मुखमादिर्येषां गात्राणां तानि मुखादीनि । गात्राणीति च ना-
१० भिप्रदेशस्य मा भूत् । अभिव्रज्य गत्वा गात्रदेशान् प्रक्षालयति शोधयति ॥ मुखं शुन्धस्व देवयज्याया इ-
ति ॥१९॥ मुखं प्रक्षालयति 'मुखादीनि' इति वचनात् ॥ प्राणानिति नासिके ॥२०॥ 'प्राणान् शुन्धस्व देवयज्याया' इति सर्वत्रो-
दर्कः साकाङ्क्षत्वात् । 'यथार्थमुदर्कान्' [5] इति वचनात् ॥ चक्षुरिति चक्षुषी ॥२१॥ चक्षुः शुन्धस्व इत्यादि ॥
श्रोत्रमिति कर्णौ ॥ २२ ॥ सकृन्मन्त्रः ॥ यत्ते क्रूरं यदास्थितम् इति समन्तं रज्जुधानम् ॥ २३ ॥ यत्ते क्रूरं यदास्थितं तच्छुन्धस्व देव-
यज्याया इति । यत्तदोर्नित्यसंबन्धात् । ग्रीवाया बन्धनस्थानम् । समन्तं सर्वत इत्यर्थः ॥ चरित्राणीति पादान् समा-
१५ हृत्य ॥२४॥ चरित्राणि शुन्धस्व इत्येव । पादानेकीकृत्य प्रक्षालयति सकृत् ॥ नाभिमिति नाभिम् ॥२५॥ प्रक्षालयतीति शेषः ॥
मेढ्रमिति मेढ्रम् ॥ २६ ॥ मेढ्रं प्रजननम् ॥ पायुमिति पायुम् ॥ २७ ॥ पायुं गुदम् ॥ यत्ते क्रूरं यदास्थितं तच्छुन्धस्व इत्यवशिष्टाः पा-
र्श्वदेशेऽवसिच्य यथार्थं व्रजति ॥ २८ ॥ तच्छुन्धस्व देवयज्याया इत्यनेनावशिष्टा अपः पार्श्वदेशेऽवसिच्य क-
र्ता यथाप्रयोजनमवश्यकार्यार्थं गच्छति । पत्नी अवश्यकर्मा च इह विधानात् । सर्वे मन्त्राः कर्तुः प्रैषत्वात् ॥
वपाश्रपण्यावाज्यं स्रुवं स्वधितिं दर्भमादायाभिव्रज्योत्तानां परिवर्त्यानुलोमं नाभिदेशे दर्भमास्तृणाति ॥ २९ ॥ ओ-
२० षधे त्रायस्वैनम् इति । ययोः शाखयोः स्थापिता वपा श्रप्यते ते वपाश्रपण्यौ । घृतं स्रुवं स्वधितिं दर्भं चान्वारम्भणार्थं
सर्वानेतान् गृहीत्वा अभि शामित्रं वशामुत्तानां कृत्वा लोमानुगतां नाभिलक्षिते देशे वशाभिमुखमास्तृणा-
ति । 'ओषधे त्रायस्वैनम्' इत्येतावत्त्वम् । स्वधिते मैनं हिंसीः इति शस्त्रं प्रयच्छति ॥ ३० ॥ पूर्वत्रेतिकरणभावे तु मन्त्रः ।
शस्त्रप्रदानं मारणार्थं मा भूत् । शस्त्रप्रदानेऽर्थलिङ्गं प्रयोगात् ॥ इदमहमामुष्यायणस्यामु-
ष्याः पुत्रस्य प्राणापानावप क्रन्तामि इत्यपकृत्य ॥ ३१ ॥ अधरप्रव्रस्केन लोहितस्यापहृत्य ॥ ३२ ॥ इदमहमामुष्यायण-

स्यामुष्याः पुत्रस्य प्राणापानौ निखनामि इत्यास्ये निखनति ॥ ३३ ॥ प्रथमेन मन्त्रेण नाभिदेशं छिनत्ति सह दर्भेण । दर्भस्याधरेण खण्डेन तल्लोहितं स्पृष्ट्वा । द्वितीयेन मन्त्रेण दर्भखण्डं लोहितलिप्तं श्लेष्मश्रपणं निहितम्। आस्यस्थाने च । इतरशब्दस्य [1] गतिवचनात् । 'इदमहमक्षब्राह्मणायनपुत्रस्य वेञ्चिकापुत्रस्य प्राणापानावपक्रन्तामि' इति । एवं द्वितीयोऽपि मन्त्रो योज्य इति ॥ वपया द्यावापृथिवी प्रोर्णुवाथाम् इति वपाश्रपण्यौ वपया प्रच्छाद्य ॥ ३४॥ वपा-
५ श्रपण्यावेकशाखाद्विशाखे पूर्वत्र गृहीते वपया प्रच्छाद्य ॥ स्वधितिना प्रकृत्योत्कृत्य ॥ ३५ ॥ प्रकृत्तिः स्वधितिधारयाकृत्या । वपादेशस्य चर्मणः प्रकृत्य वपाभावात् । उत्कृत्य च पशोः । 'वपाश्रपण्यौ वपया प्रच्छाद्य' इति ल्यबभिधानात् प्रच्छादनं विधानान्ते । प्रथमं कस्माद्विपर्ययविधानम् । पदाऽऽदेशमन्त्रसंप्रत्ययार्थमिति । इतरथा हि पशोराच्छादनं स्यात् । तत्प्रकरणात् । वशायाश्च संप्रयोगो वाक्यान्तरेणावच्छेदनविधानात् 'विशस्य समवत्तानि' इति वचनात् । न च कर्तव्यं चर्मावच्छेदनं प्रयोगदर्शनात् । 'विशस्य' इति कथम् । उच्यते ।
१० विशसनं चाङ्गच्छेदनार्थं स्यात् ॥ आव्रस्कमभिघार्य ॥ ३६ ॥ आव्रस्कं यस्माद्देशात् वपोद्धृता तं देशमभिघारयति ॥ वायवे स्तोकानाम् इति दर्भाग्रं प्रास्यति ॥३७॥ अग्नौ । नाभिदेशनिहितं दर्भाग्रम् । अनियते देशे क्षेपणमेव ॥ प्रत्युष्टं रक्ष[2] इति चरमाङ्गारे निदधाति ॥३८॥ अनेन मन्त्रेण पश्चिमाङ्गारे स्थापयति । वपाशब्द इति वक्तव्ये चरम इति केचित् ॥ देवस्त्वेति श्रपयति ॥ ३९ ॥ चरमाङ्गारे प्रथमं निधाय सर्वस्मिन्नेवाग्नौ श्रपयति ॥ सुशृतां करोति ॥ ४० ॥ घृतेनावसिच्यावसिच्य वपा सुशृता भवति । सम्यक् श्रपयतीति ॥ इति श्रीभट्टदारिलकृतौ
१५ कौशिकभाष्ये पञ्चमाध्याये अष्टमी कण्डिका ॥ ८ ॥ ॐ । यद्यष्टापदी स्याद्गर्भमञ्जलौ सहिरण्यं सयवं वा य आत्मदा[3] इति खदायां त्र्यरत्नावग्नौ सकृज्जुहोति ॥ १ ॥ यदि वशा गर्भिणी स्यात् । गर्भिणीवचनं चैतत् । गर्भं सह हिरण्येन सह वा यवैः अञ्जलौ कृत्वा 'य आत्मदा' इति सूक्तेन सकृत् न प्रत्यृचम् । खदा गर्तः । तस्यां त्रिहस्तायामग्निं प्रज्वाल्य जुहोति । पुनः सूक्तग्रहणं मन्त्रो मा भूत् । सकृद्वचनं स्विष्टकृद्विनिवृत्त्यर्थम् ॥ विशस्य समवत्तान्यवद्येत् ॥ २ ॥ चर्मणः इतरेतराणां चाऽपनीय कृत्वेत्यर्थः । समवत्तानीति हृदयादीनामङ्गानां संप्रत्ययः । 'सम-
२० वत्तानाम्'[4] इति संव्यवहारः । सहहोमार्थं च गुणविधानम् ॥ हृदयं जिह्वा श्येनश्च दोषी पार्श्वे च तानि षट् । यकृद्वृक्कौ गुदः श्रोणी तान्येकादश दैवतानि ॥ ३ ॥ यकृत् स्नेहसंबन्धम् । वृक्कौ प्रसिद्धौ मांसगोलकौ । गुदः प्रसिद्धः । श्रोणी लोके प्रसिद्धा । तान्येकादशाङ्गानि । अन्यतरा दोषोः श्रोण्योश्च । स्विष्टकृत्संयोगादेकदेशत्वम् ॥ दक्षिणः कपिललाटः सव्या श्रोणिर्गुदश्च यः । एतानि त्रीणि त्र्यङ्गानि स्विष्टकृद्भाग एव सः॥ ४ ॥ एवयोगाद्देवता न भुङ्क्ते । अतश्च द्विर्द्विर्दैवतानामपि हविः । एतेषां संप्रत्ययः । वृक्कयोर्भेदः एकादशत्वात् ।

दक्षिणः कपिललाटः दक्षिणो बाहुः सव्या श्रोणिः सक्थि गुदश्च एतानि त्रीणि त्र्यङ्गसंज्ञा-
नि वितानवत् प्रत्येतव्यानि । 'त्र्यङ्गैः स्विष्टकृतं यजति'[१] इत्यत्र स्विष्टकृत एव भागः प्राजापत्यादिप्रयोगः ॥
तदवद्य प्रज्ञातानि श्रपयेत् ॥ ५ ॥ तान्येतानि अवखण्डनानि[२] पशोः सचिह्नानि श्रपयेत् । एकस्यां स्थाल्यामवद्यति
दैवतानि आविष्कृतानि चेति यथा स्यात् । अत्रैव स्थालीपाकश्रपणमव्यक्तधर्मकम् ॥ होष्यन् द्विर्द्विर्दैव-
५ तानामवद्येत् ॥ ६ ॥ हवनकाले हृदयादिभ्यः द्विर्द्विरवखण्डयेत् । इहावदानवचनं समवत्ताधिकारोपजीवनात्[३] ।
यदि च होमाधिकारः[४] । उच्यते । स्विष्टकृदर्थं पुनः समवत्तग्रहणप्रसङ्गः । 'द्विर्द्विः' 'सकृत्' इति मध्याद्यनियमार्थम्[५] ॥
सकृत् सकृत् सौविष्टकृतानाम् ॥७॥ अवद्येदिति शेषः ॥ वपायाः समिद्ध[६] ऊर्ध्वा अस्य[७] इति जुहोति ॥८॥ चत्वारि खण्डानि वपां कृत्वा
द्वे खण्डे सूक्तेन होतव्ये । 'समिद्धो अद्य' एतेनैकम् । 'ऊर्ध्वा अस्य' इति द्वितीयं खण्डम् । 'समिद्ध' इत्य-
न्यकर्माभावात् सूक्तमेतत् । सामान्यादितरदपि सूक्तम् ॥ युक्ताभ्यां तृतीयाम् ॥ ९ ॥ समुच्चिताभ्यां तृतीया-
माहुतिं जुहोति ॥ आनुमतीं चतुर्थीम् ॥ १० ॥ 'अनुमतिः सर्वम्'[८] इत्यनया ॥ जातवेदो वपया गच्छ... स्वाहा ॥११॥ स्वाहा-
१० कारान्तया सकृदाज्यं जुहोति ॥ ऊर्ध्वनभसं मारुतं गच्छतम् इति वपाश्रपण्यावनुप्रहरति ॥ १२ ॥ प्राची-
मेकशृङ्गां प्रतीचीं द्विशृङ्गाम् ॥१३॥ वपाश्रपण्योः शाखा अग्नौ क्षिपति । प्रागग्रामेकशृङ्गाम् । सकृन्मन्त्रः । द्विवचनप्रयोगात्
युगपत्प्रहरणं सव्यदक्षिणाभावात् ॥ पित्र्येषु वह वपां...इति वपायास्त्रिर्जुहोति ॥ १४ ॥ पितृदेवत्येषु पशुष्वेतेन
मन्त्रेण त्रिर्जुहोति वपायाः । आनुमतीं चतुर्थीमिति भवत्यप्रत्याम्नायात् । पित्र्यश्राद्धेषु उक्तं वचनं 'वपया सतच्छि-
द्रया'[९] इति वपानिधानमिति । 'वपायास्त्रिर्जुहोति' 'इमं यमं'[१०] इति यमाय चतुर्थीम्'[११] इति ॥ समवत्तानाम् ॥१५॥ समवत्ते-
१५ भ्यः जुहोतीति प्रकरणात् । सूक्तेन[१२] इति त्रिर्जुहोति वशाप्रकरणात् । सकृत्सौविष्टकृतानां चतुर्थीमिति वशाभि-
संबन्धात् । प्राकृतः[१३] स्विष्टकृन्मन्त्रसंबन्धाच्च प्राकृतेन मन्त्रेण ॥ चरुहोमः । स्थालीपाकस्य सम्राडसि...इति जुहोति॥१६॥ स्थाली_
पाकाच्च जुहोति । 'सम्राडसि' इति मन्त्रेण कर्मत्वात् स्थालीपाकस्य । 'अन्वद्य नोऽनुमतिर्यज्ञम्'[१४] इति स्थालीपाका-
दनुमतये जुहोति । जुहोतिग्रहणं होमाधिकारात् । सकृदर्थः । स्विष्टकृत्प्रकृतत्वात् ॥ अतः परमुत्तरतन्त्रम् ।
क इदं कस्मा अदात्[१५] कामस्तदग्रे[१६] यदन्नं[१७] पुनर्मैत्विन्द्रियम्[१८] इति प्रतिगृह्णाति ॥ १७ ॥ 'क इदम्' इति द्वे । 'कामस्तदग्रे' इति
२० सूक्तम् । 'यदन्नम्' इति सूक्तम् । 'पुनर्मैत्विन्द्रियम्' इत्येका । प्रतीकविकल्पो विधिकर्मत्वात् । प्रतिग्राह्यं सर्वे-
म् । शेषत्वात् बहिर्वेद्यन्तर्वेदि वा । वशामध्ये विधानं शमनस्य नित्यत्वज्ञापनार्थम् । तस्माद्वशाया अपि
प्रतिग्रह एतैः ॥ उत्तमा सर्वकर्मा ॥१८॥ 'पुनर्मैत्विन्द्रियम्' इति इयं सर्वकर्मा । यावन्ति विधिकर्माणि सर्वाण्यस्या

भवन्ति विधिकर्माणि ॥ वशया पाकयज्ञा व्याख्याताः ॥ १९ ॥ अनया वशया पशुपाकयज्ञाः कथिता वेदितव्याः । इतिकर्तव्यता तेष्वित्यर्थः ॥ इति श्रीभट्टदारिलकृतौ कौशिकभाष्ये पञ्चमेऽध्याये नवमी कण्डिका ॥ ९ ॥ उतामृतासुः[1] शिवास्त[2] इत्यभ्याख्याताय प्रयच्छति ॥ १ ॥ प्रतिषिद्धकर्मकर्तृत्वेनाभिशस्तः अभ्याख्यातः । तस्मै मन्थौदनौ प्रयच्छति[3] । प्रायश्चित्तम् ॥ द्रुघणशिरो रज्ज्वा बध्नाति ॥ २ ॥ द्रुघणः रथकारोपस्करः द्रुममयो घनः[4] ।
५ तस्य शिरो बध्नाति रज्ज्वा सूत्रेण । तस्यावयवं बध्नाति । प्रसिद्धस्यावयवः । उत्तरत्र प्रतिरूपवचनात् ॥ प्रतिरूपं पलाशायोलोहहिरण्यानाम् ॥ ३ ॥ प्रतिरूपः द्रुघणशिरःसदृशः । पलाशः प्रसिद्धः । अयः कृष्णम् । लोहं ताम्रम् । हिरण्यं सुवर्णम् । एतेभ्यः द्रुघणशिर इव कृत्वा बध्नाति । अभ्याख्यातप्रायश्चितम् ॥ येन सोमा[5] इति याजयिष्यन् सारूपवत्समश्नाति ॥ ४ ॥ आर्त्विज्यं करिष्यन् । समानवर्णवत्सायाः पयसि संस्कृतः सारूपवत्सः । तमश्नात्याज्यतन्त्रेण । न याजनकृतमेनः स्पृशति । 'आ नो भर'[6] इत्यनुक्त्वा 'येन सोमा'[5] इत्यस्य विधाने क्रमभेदः किमर्थः । उच्यते । 'आ
१० नो भर'[6] इत्यस्य यत्रतत्रस्थस्य सूक्तस्य संप्रत्ययार्थम् । नास्य 'ग्रहणमा ग्रहणात्'[7] इति निवृत्तिः ॥ निधने यजते ॥५॥ याजनसमाप्तौ यजते । सोमो देवता मन्त्रलिङ्गात् । नादित्यादिभ्यो नैघण्टुकत्वात्[8] ॥ यं याचामि[9] यदाशसा[10] इति याचिष्यन् ॥ ६ ॥ प्रार्थनां करिष्यन् 'यं याचामि'[9] इत्यत आरभ्य सूक्तशेषेण । 'यदाशसा'[10] इति द्वे । अनयोरभ्यन्तरेण सारूपवत्समश्नात्याज्यतन्त्रेण । न प्रतिग्रहकृतमेनः स्पृशति । निधने याजनवद्वचनात् ॥ मन्त्रोक्तनिपतितेभ्यो देवाः कपोत[11] ऋचा कपोतम्[12] अमून् हेतिः[13] इति महाशान्तिमावपते ॥ ७ ॥ मन्त्रोक्ता उलूककपोताः । तेभ्यः अनुचित-
१५ देशगतेभ्यः यदशर्म तन्निष्क्रयायेदमुच्यते । एतानि त्रीणि महाशान्तिं चानारभ्यवादोक्ताम् । न चकारोऽत्र पठितः गम्यमानत्वात् । कृत्याप्रतिहरणवत् । तत्तुल्यनिर्देशश्चोभयोः समानकर्मत्वात् । 'विशये यथान्तरम्'[14] इति । तस्मात् 'अग्रतःप्रोक्षन्'[15] इत्यादेः कृत्याप्रतिहरणवत् 'माभूरिति'[16] इत्यन्तात् । 'निशि' इति चावयवग्रहणादविधानाच्चेह कृत्यायाः 'अवमुच्योष्णीषी'[15] इति कृत्यानिदर्शनात् प्राप्नुयात् । इह त्वर्थवत्त्वान्निवर्तेत ॥ परीमेऽग्निम्[17] इत्यग्निं गामादाय निशि कारयमाणस्त्रिः शालां परिणयति ॥ ८ ॥ कारयमाणोऽग्निं गां चाददाति । मन्त्रस्त्वकर्तुः सामर्थ्यात् । 'निशि' इ-
२० त्यवयवग्रहणं कृत्याप्रतिहरणग्रन्थस्य 'निश्यवमुच्य' इत्यादेः 'माभूरिति' अन्तात् । कर्तुर्होमो यत्र मन्त्रोक्तनिपतनम् ॥ परोपेहि[18] यो न जीव[19] इति स्वप्नं दृष्ट्वा मुखं विमार्ष्टि ॥ ९ ॥ घोरं स्वप्नं दृष्ट्वाऽपमार्जनं मन्त्रेण शोधनम् । प्रतीकसमुच्चयः 'यो न जीव'[19] इति ग्रहणमविभागत्वात् । होमनिधानयोस्तु लिङ्गात् यथासंख्यम् ॥ अतिघोरं दृष्ट्वा मैश्रधान्यं पुरोडाशमन्याशायां वा निदधाति ॥ १० ॥ शत्रुक्षेत्रे वा मन्त्रलिङ्गाद्यथासंख्यम् । विमार्जनेन न योगः । ग्रहणस्यान्यार्थत्वात् सांग्रामिकवत्[20] ॥ पर्यावर्ते[21] इति पर्यावर्तते ॥ ११ ॥ येन पार्श्वेन स्वप्नः दृष्टः ततोऽन्येन पार्श्वेन शो-

ते। 'नहि ते अग्ने तन्व'[1] इत्युक्त्वा 'पर्यावर्तते'[2] इत्यस्योच्यते स्वप्नसामान्यात् ॥ यत्स्वप्न[3] इत्यशित्वा वीक्षते ॥१२॥ मन्त्रान्ते निभालयते अन्नमिव भुक्त्वा ॥ विद्म ते स्वप्न[4] इति सर्वेषामप्ययः ॥ १३ ॥ अस्य पर्यायस्य सर्वाणि स्वप्नप्रायश्चित्तानि भवन्ति। अनुक्रमभेदो विशेषसामान्यादेव ॥ नहि ते अग्ने तन्व[1] इति ब्रह्मचार्याचार्यस्यादहन[5] उपसमाधाय त्रिष्परिक्रम्य पुरोडाशं जुहोति ॥ १४ ॥ यावन्न संचयनं सामर्थ्यात्। ब्रह्मचारी अस्नातः। आचार्यः कथितः 'तद्यस्मात् स आचार्यो वेदानुवचनाच्च'[6] इति। वेदस्य आचार्याभावादेवानुवचनाभावः। तदभावेऽन्यत्रैकं पदं वाच्यमिति वचनात् सिद्धम्। सपुनरुक्तं वेदमधीत्य स्नायादिति वचनात् नापरित्यक्तस्य नैमित्तिकं स्नानम्। तस्मादुपनयनानन्तरमेव सपुनरुक्तायाः[7] संहिताया अध्ययनम्। आदहनदेशः। तत्र प्रज्वाल्याग्निम् 'उपसमाधाय' इत्यर्थलक्षणत्वात्। जुहोतिग्रहणं 'अन्याशायां वा निदधाति'[8] इति मा भूत्। त्रिष्परिक्रमणमादहनस्य न तन्त्रमुपसमाधायवचनात् ॥ त्रिरात्रमपर्यावर्तमानः शयीत ॥ १५ ॥ गुरुपार्श्वेनेत्यर्थः। आदहनाभिमुखो गौरवात् ॥ आदहनसमीपे 'उप'शब्दात्। नोपशयीतेति कौशिकः ॥ १६ ॥ नोपशयनं कौशिको मन्यते। तस्माद्गोत्रेणाभिधानं कृतम्। अशुचित्वात् ॥ स्नानीयाभिः[9] स्नायात् ॥ १७ ॥ एतत्कृत्वा । स्नानीयाभिरुपलक्ष्यते परिमोक्षः[10]। 'अपो दिव्या'[9] इत्यासां वैशेषिकत्वात्। अङ्गिरसं प्रति न, स्वकर्माङ्गत्वात् ॥ अपर्यवेतव्रतः प्रत्युपेयात् ॥ १८ ॥ असमाप्तब्रह्मचर्यं पुनरुपनयनं कारयेत्। तद्यथा। आसन्नतया अन्येन भावेन वा ॥ अवकीर्णिने दर्भशुल्बमासज्य यत्ते देवी[11] इत्यावपति ॥ १९ ॥ अवकीर्णी ब्रह्मचारी। तस्मै दर्भशुल्बं ग्रीवायां बद्ध्वा 'यत्ते देवी' इत्यनेन सूक्तेन आवपति। व्रीहियवतिलानामन्यतमम्[12]। विकल्पेन तन्त्रम् ॥ एवं संपातवतोदपात्रेणावसिच्य ॥ २० ॥ 'यत्ते देवी' इति सूक्तेनोदपात्रं संपात्य तेनोदपात्रेण दर्भशुल्बमवसिच्य ग्रीवायामावपति। 'एवं'शब्दात् ॥ मन्त्रोक्तं शान्त्युदकेनोपसिच्य ॥ २१ ॥ शुल्बं शान्त्युदकेनोपसिच्य। 'यत्ते देवी' इत्यत्र विमोक उक्तः। तं करोति। 'तत्ते-
'विष्यामि'[13] इति। पूर्वं शान्त्युदकेनोपसिच्य ग्रीवास्थं शुल्बमासक्तं यत्। अभ्यातानान्ते शान्त्युदकक्रियावचनादेककर्मत्वाच्च ॥ सं समित्[14] इति स्वयंप्रज्वलितेऽग्नौ ॥ २२ ॥ अनया यदि काष्ठैर्विनाऽङ्गारावस्थो ज्वलति तत्र अग्नौ सक्तुज्जुहोति। 'त्र्यरत्नावग्नौ सक्तुञ्जुहोति'[15] इति यथान्तरत्वात्[16]। अग्नौ इत्यसति जुहोतीति न स्यात् ॥ अग्नी रक्षांसि सेधति[17] इति सेधन्तम् ॥ २३ ॥ तमेवाग्निमुपतिष्ठते ॥ यदस्मृति[18] इति संदेशमपर्याप्य ॥ २४ ॥ संदेशमकथयित्वाग्निमुप-

तिष्ठते । प्रकरणात् । पूर्वस्य क्रमभेदोऽग्निसंबन्धः। सोमस्य ग्रहणे जुहोतिविधानं तुल्यनिर्देशात् ॥
प्रत्नो हि[1] इति पापनक्षत्रे जाताय । पापनक्षत्रं ज्योतिर्ग्रन्थस्मृतेः । मूलेन ॥२५॥ कर्म व्याख्यातम् । मूलेन फलं च इति
एतत् । मूलजातस्येदमेव पापनक्षत्रत्वात् । ज्येष्ठादीनि पापनक्षत्राणि ॥ मा ज्येष्ठं[2] त्रिते देवा[3] इति परिवित्ति-
परिविविदानावुदकान्ते मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति ॥२६॥ परिवित्तिर्ज्येष्ठः । परिविविदानः कनीयान् प-
५ रिणीतः ज्येष्ठेनापरिणीतेन । द्वितीयाद्द्विवचनम् । उदकसमीपे मौञ्जैः पाशैः मुञ्जनिर्वृत्तैः शरीरसंधिषु ब-
द्ध्वा संपातिताभिरद्भिर्दर्भपिञ्जूलीभिराप्लावयति । उभौ एकचोदनाचोदितत्वात् । 'त्रिते देवा' इति सूक्तसंप्रत्य-
यार्थं ग्रहणम् । 'नदीनां फेनान्[4] इत्याप्लावयति' इति ग्रहणप्रसङ्गात्[5] । उदकान्ते इति देशनियमः ॥ अवसि-
ञ्चति ॥२७॥ अवसिञ्चति चेति चकारः चशब्दाभावे । उभयत्र मन्त्रस्तुल्यवदभिधानात् ॥ फेनेषूत्तरान् पाशानाधा-
य नदीनां फेनान्[4] इत्याप्लावयति ॥२८॥ नदीफेनेषु तान् मौञ्जान् पाशान् स्थापयति । कथम् । उत्तरोत्तरपाशोपर्यन्य-
१० पाश इत्यशेषकिल्बिषप्रवाहणस्य ॥ सर्वैश्च प्रविशयापां सूक्तैः ॥२९॥ 'अम्बयो यन्ति'[6] इति गणोऽब्लिङ्गः। प्रविशंस्त-
न्निवेशनं कर्ताऽऽप्लावयति अवसिञ्चतीति । वचनात् । सर्वग्रहणमप्संबन्धार्थम् । अब्लिङ्गानि समुदा-
यः । सूक्तशब्दस्य स्तुतिनिमित्तत्वात् ॥ देवहेडनेन मन्त्रोक्तम् ॥३०॥ कुर्यादिति शेषः । 'यद्देवा देवहेडनम्'[7] इ-
ति सर्वोऽनुवाकः। नाम्नाभिधानात् । किं मन्त्रोक्तम् । उच्यते । 'मेदस्वता स्रुवाज्यं जुहोति'[8] । गार्हपत्ये मातापित्रोश्चित्या-
मारोप्यमाणयोः 'जिहिंसिम'[9] इति लिङ्गात् । अस्य प्रयोगः प्राक् स्रुचः प्रतिपत्तेः स्रुक्साधनत्वात् ॥ आ-
१५ चार्याय च ॥३१॥ मन्त्रोक्तं कुर्यात् 'च' वचनाच्चतुर्थीनिर्देशादिति गार्हपत्ये ॥ अथ जीवति स्यात् । उपदधीत ॥ ३२ ॥
हविषामन्यतमं[10] जुहुयात् देवहेडनेन । कस्यानेनाधिकारः । अत्राह । उपदधीतेति यागकर्तुः । निमित्तसंप्र-
योगात् । 'यद्... एनांसि चकृमा वयम्'[11] इति निमित्तनिमित्तिसंयोगात् ॥ खदाशयस्यावपते ॥३३॥ खदायां शेते यद्
धान्यं बीजं तस्यावपते । आवपतिग्रहणं व्रीहियवतिलार्थम्[12] । अतश्च धान्यं निचेयम् ॥ वैवस्वतं य-
जते ॥३४॥ विवस्वते खदाशयचरुं कुर्यात् ॥ चतुःशरावं ददाति ॥३५॥ खदाशयधान्यस्य चत्वारि शरा-
२० वाणि पूरयित्वा देवहेडनेनानुवाकेनाभिमन्त्र्य ब्राह्मणाय दद्यात् । चतुर्णां शरावाणां समूहः चतुः-
शरावम् । अतस्तच्चतुःशरावं ददाति । खदाशयस्य कर्माणि त्रीणि खदाशयावापादीनि ॥
उत्तमर्णे मृते तदपत्याय प्रयच्छति ॥ ३६ ॥ देवहेडनेनाभिमन्त्र्य । 'तद्'ग्रहणं कृत्रिमापत्याय मा भूत् ॥ सगोत्रा-
य ॥ ३७ ॥ अपत्याभावे ॥ श्मशाने निवपति ॥ ३८ ॥ सगोत्राभावे तत् श्मशाने प्रक्षिपति देवहेडनेनाभिमन्त्र्य ॥

चतुष्पथे च ॥३९॥ श्मशानाभावे चतुष्पथे क्षिपति ॥ कक्षानादीपयति ॥ ४० ॥ तृणमुष्टीन्निर्दहति । कस्मिन्नि-
मित्ते । अत्राह । 'कक्षानादीपयति' इति 'आ' श्रुत्या निर्दहनम् । विभक्त्यन्तरत्वात् ॥ दिवो नु माम्[१] इति वीध्र-
बिन्दून् प्रक्षालयति ॥४१॥ विगताभ्रबिन्दून् पतितान् शरीरे प्रक्षालयति द्वाभ्याम् ॥ अथ च । मन्त्रोक्तैः स्पृ-
शति ॥४२॥ वृक्षात् पतितैः फलैराम्रादिभिः ॥ यस्योत्तमदन्तौ पूर्वौ जायेते यौ व्याघ्रौ[२] इत्यावपति ॥४३॥ यस्य
५ बालस्य उत्तमौ दन्तौ दृश्येते तत्र 'यौ व्याघ्रौ' इत्यावपति व्रीह्यादीन्[३]। पूर्वं निमित्ताभिधानम् । पारिभाषिक-
भावो[४] मा भूत् । मन्त्रोक्तानि[३] यथा स्युः। दन्तग्रहणं मन्त्रलिङ्गविशेषात् । मन्त्रोक्तान् दंशयति ॥ ४४ ॥ व्रीह्यादीन्
समुच्चितान् । द्वितीयानिर्देशात् ॥ शान्त्युदकशृतमादिष्टानामाशयति ॥४५॥ व्रीह्यादीनामन्यतमतण्डुलैः[३]
शान्त्युदके शृतं स्थालीपाकमाशयति बालम् । द्रव्यविकल्पः षष्ठीश्रवणात् ॥ पितरौ च ॥४६॥ मातापितरौ चाशय-
ति । 'पिता मात्रा'[५] इत्येकशेषः । चकारात् प्रकृतस्यैवाशनसंप्रत्ययार्थम् । तयोरेव भक्षणात् फलम् ॥ इदं यत्
१० कृष्ण[६] इति कृष्णशकुनिनाधिक्षिप्तं प्रक्षालयति ॥४७॥ कृष्णशकुनिः काकः । अधिक्षेपः तद्वायुसंस्पर्शः । प्रक्षाल-
नं द्वाभ्यामधिक्षिप्तस्य ॥ अपमृष्टं पर्यग्नि करोति ॥४८॥ कृष्णशकुनिस्पृष्टं तत्प्रदेशं द्वाभ्यां पर्यग्नि करोति । 'म-
नुष्यजातेः कर्माणीति प्रतीचीनफलेत्यादीनि शान्तिकर्माणि' अत्र उपाध्यायवत्सशर्मपादाः पठन्ति ॥
प्रतीचीनफल[७] इत्यपामार्गेध्मेऽपामार्गीरादधाति ॥ ४९ ॥ इति व्याख्यानम् । अपामार्गसमिध आदधात्यभिशप्तः ॥
'यदर्वाचीनम्' इत्यस्याः किमर्थमत्रापि पठनम् । यदर्वाचीनम्[८] इत्याचामति ॥ ५० ॥ अनृतमुक्त्वा एतया उत्त-
१५ रया कर्म । अनन्तरयोगात् समानलिङ्गत्वाच्च ॥ यत्ते भूम[९] इति विखनति ॥ ५१ ॥ तत् 'यत्ते भूम'[९] इति ॥ य-
त्त ऊनम्[१०] इति संवपति ॥ ५२ ॥ अनया गर्तादिप्रपूरणम् । मृदन्तरयोगात् । पृथिव्यूनप्रतिपूरणे नित्यं प्रायश्चित्त-
त्वमनन्यत्वात् । न च खनिपूरणमनवस्थाप्रसङ्गात् ॥ प्रेहि प्र हर...[११] इति कापिञ्जलानि स्वस्त्ययनानि
भवन्ति ॥ ५३-५४ ॥ कपिञ्जलः तित्तिरिसदृशः । तित्तिरिरेवेत्यपरे । कपिञ्जलवाशितानि तान्यशोभनानि अपि शाम्य-
न्त एव । यदा च शमितानि तानि तदा स्वस्त्ययनानि भवन्ति । अन्तरेणापि वाशनं जपसंयोगात् निरधि-
२० काराच्चेह विधिः स्वस्त्ययनस्य ॥ यो अभ्र्यु बभ्रुणायसि ...[१२] इति अभ्यवकाशे संविशति ॥५५॥ अम्बरे आकाशे चान्यस्मिन्
वा लोकगर्हिते । दोषसंयोगात् दोषशमनायास्या जपः ॥ दशमी कण्डिका समाप्ता ॥ महावेदा-
र्थविद् उपाध्यायवत्सशर्मणः प्रपौत्रस्य भट्टदारिलकृतौ कौशिकभाष्ये पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

ॐ। ‘ विधिर्नैमित्तिकः प्रोक्तः संहिताक्रमहेतुकः। क्रमप्राप्तोऽभिचारस्य संहिताया इहोच्यते ’। ननु च परविना-
शप्रतिषेधादकर्तव्यस्योपदेशो वक्तव्यः। नैवाभिचारः प्रतिषिध्यते प्रत्युत विधीयते। ‘न ब्राह्मणो
वेदयेत ’[1] इत्यादि मनुः पठति॥ अत्राह। उभयतःपरिच्छिन्नं शरमयं बर्हिराभिचारिकेषु ॥ १ ॥ बर्हि-
र्वेदिस्तरणार्थमन्यत्र दर्भशब्दप्रयोगात् ‘ अपरेणाग्नेर्दर्भानास्तीर्य ’ [2] इत्यादि। अतश्च परिभोजनी-
५ यान् दर्भानेव। उभयतःपरिच्छिन्नं सर्वच्छिन्नमूलाग्राभिप्रायम्। शराः प्रसिद्धाः। तन्मयं वेदिस्तरणाय स्यात्।
अभिचारप्रयोजनान्याभिचारिकाणि[3] कर्माणि। आभिचारिकेष्वाज्यतन्त्रपुरस्ताद्धोमादयो मन्त्रान्तराम्नाना-
त्। जाङ्मायने[4] संपाताभावः ‘ शान्तानाम् ’ [5] इति विशेषणात्। ‘सबर्हिषः साज्या यज्ञाः ’ [6] इति विशेषविधानात्।
अत्र शरादिभिः संभारैः सामान्याधिकारात्। प्रसव्यं स्तरणं ‘ प्रसव्यम् ’ [7] इति वचनात्। न पार्वणसमृद्धि-
काम्याः[8] ‘ शान्तानाम् ’ इति विशेषणसामर्थ्यात्॥ दक्षिणतः संभारमाहरत्याङ्गिरसम् ॥ २ ॥ कल्पः बहिरध्याय-
१० पठितः। आङ्गिरसः सप्तवर्गपठितः। कल्पः बहिरध्यायकश्चानारभ्यवादात्। ननु वेदिकरणं वच-
नात् दक्षिणस्यां दिशि आङ्गिरसाग्निनियमादसिद्धत्वम्। ‘ यथावितानम् ’ [9] इति वचनात् घोरद्रव्या-
णां चाहरणविधानात्॥ इङ्गिडमाज्यम्॥ ३ ॥ श्वलोहितादिप्रसङ्गे इङ्गिडनियमाच्च दर्भस्तम्बनिवृत्तिः नोत्पव-
नकर्म। अमेध्यसंयोगात्। यथादिष्टं बर्हिः। ‘ परिस्तीर्य ’ इत्यत्रोत्पवनविधिः[10] ॥ सव्यानि ॥ ४ ॥ आभिचारिकाणि ॥
दक्षिणापवर्गाणि ॥ ५ ॥ दक्षिणस्यां दिशि परिसमापनीयानि ॥ दक्षिणाप्रवण इरिणे दक्षिणामुखः प्रयु-
१५ ङ्क्ते ॥ ६ ॥ दक्षिणानिम्नदेशे इरिणे वा। उभयविशिष्टे इति केचित्। दक्षिणामुखः कर्ता प्रयुङ्क्ते ॥ किं चान्य-
दाभिचारिकाणामाह। साग्नीनि ॥ ७ ॥ न सर्वाणि। यानि साग्नीनि तानि। अन्यत्र वचनेऽप्ययं नियमः। यज्ञो-
पवीतीत्यादि [11] च नियमात् न चाभिचारिकाणि पित्र्याणि ॥ अग्ने यत्ते तप [12] इति पुरस्ताद्धोमाः ॥ ८ ॥
पञ्च सूक्तानि पुरस्ताद्धोमा इत्यादेशविध्यर्थम् ॥ तथा तदग्ने कृणु जातवेद [13] इत्याज्यभागौ ॥ ९ ॥ द्वे ऋ-
चे आज्यभागग्रहणे आदेशार्थम् ॥ निरमुं नुद [14] इति संस्थितहोमाः ॥ १० ॥ सूक्तं संस्थितग्रहणे उक्तम् ॥
२० कृत्तिकारोकारोधावाप्येषु ॥ ११ ॥ अभिचारप्रयोगकालविधिः। कृत्तिकासु नक्षत्रे। अरोकः कृष्णपक्षः। अ-
रोधः [15]। अवाप्यः अमावास्या। एषु कालेष्वभिचारः कार्यः। कृत्तिकासु चारोके चारोधे चावाप्ये च। अरोक-
ग्रहणमा विधानसमाप्तेः। अवाप्यग्रहणमा अन्त्यविमोकात् ॥ भरद्वाजप्रव्रस्केनाङ्गिर-

सं दण्डं वृश्चति ॥१२॥ 'द्यावापृथिवी उर्वन्तरिक्षम्'[1] इति सूक्तं भरद्वाजप्रव्रस्कं भरद्वाजसंप्रत्यायार्थम्। आङ्गिरसग्रहणं पूर्वेऽधिकारे असंप्रयोगे आङ्गिरसप्रसङ्गादेव। सूक्तद्वयान्ते[2] छेदनम्। तृतीयाश्रवणात्॥ मृत्योरहम्[3] इति बाधकीमादधाति ॥१३॥ व्याधिघातकीं समिधमादधाति अभ्यातानान्ते। विशेषिता स्यात् आदेशत्वात्। 'येऽमावास्याम्'[4] इति च क्रमलोपः प्रधानत्वादस्या अङ्गत्वात्॥ य इमाम्[5] अयं वज्र[6] इति द्विगुणामेकवीरां संनह्य पाशान्निमुष्टितृतीयं दण्डं संपातवत् ॥१४॥ मुण्डहस्तः दण्डः। संपातवदुभयं मेखलां दण्डं च। 'य इमाम्' इति सूक्तेन मेखलाम्। 'अयं वज्रः'

इति सूक्तेन दण्डं संपातवन्तं करोति॥ पूर्वाभिर्बध्नीते॥ १५॥ मेखलाम् 'य इमाम्' इति तिसृभिर्ऋग्भिः स्त्रीलिङ्गनिर्देशात्। प्रथमं संपात्य पश्चादभिमन्त्र्य बन्धनम्॥ वज्रोऽसि सपत्नहा...[7] इति। आभिः। दण्डमादत्ते ॥१६॥ गृह्णाति॥ भक्तस्याहुतेन मेखलाग्रन्थिमालिम्पति ॥१७॥ भक्तस्याहुतेन मेखलाग्रन्थिं सुष्ठु लिम्पति। ग्रन्थ्यालेपनादि प्रत्यहम्॥ अयं वज्र[6] इति बाह्यतो दण्डमूर्ध्वमवागग्रं तिसृभिरन्वृचं निहन्ति ॥१८॥ यो दण्डः संपातितः तिसृभिराभिः कृत्वा बाह्यतः तं दण्डमूर्ध्वमधोग्रं निहन्ति प्रत्यृचं प्रेरयत्यधः। तिसृग्रहणं 'अयं वज्र' इति प्रसङ्गात्॥ अन्तरुपस्पृशेत् ॥१९॥ सदः प्रविश्य उदकमुपस्पृशेत्॥ यदश्नामि[8] इति मन्त्रोक्तम् ॥२०॥ 'यदश्नामि' इत्येतेषु मन्त्रेषु यदुक्तं तत्करोति। अशनं पानं च कुर्यात्। यथार्थलिङ्गप्रयुक्तस्य भक्तस्याहुतेनेत्येवमादि। आदौ तु सकृत् दण्डादानं योगात्। 'अग्ने व्रतपते'[9] इति योगविमुक्तस्य पुनः सर्वम्। आह च- 'आदानं तु सकृद्योगात् भक्तादिप्रत्ययोपरि। विमुक्तस्य पुनः सर्वं संकीर्णेऽपि विधौ तदा'॥ यत्पात्रमाहन्ति फड्ढतोऽसाविति ॥ २१ ॥ यद् भोजनपात्रं तदाहन्ति। फट् हतो राम इत्यमुना॥ इदमहमामुष्यायणस्यामुष्याः पुत्रस्य प्राणापानावप्यायच्छामि इत्यायच्छति ॥ २२ ॥ दण्डं गृह्णाति। 'इदमहं रामस्य प्रच्छन्नायनस्य चेल्लमुखायाः पुत्रस्य प्राणापानावप्यायच्छामि' इति मन्त्रप्रधानमुच्यते॥ येऽमावास्याम्[10] इति संनह्य सीसचूर्णानि भक्तेऽलंकारे ॥ २३ ॥ सीसानि कथितानि[11]। तानि चूर्णीकृत्य। चूर्णान्यन्तःपुटे बद्ध्वा तानि भक्ते आवपेद् द्वेष्यस्य। अथ च द्वेष्यस्यालंकारे। सप्तमीनिर्देशात् तार्ष्टाघेध्मवत्[12]। न तन्त्रमहोमसंयोगात्॥ पराभूतवेणोर्यष्ट्या बाहुमात्र्याऽलंकृतयाऽऽहन्ति ॥ २४ ॥ द्वेष्यम्॥ द्यावापृथिवी उरु[1] इति परशुपलाशेन दक्षिणा धावतः पदं वृश्चति ॥ २५ ॥ परशुः कुठारः। पलाशं कुठारमुखम्। दक्षिणायां दिशि धावतः द्वेष्यस्य पदं पादस्थानं छिनत्ति॥ छेदनविधिमाह। अन्वक् त्रिः। अनुपदरेखाभिः। तिर्यक् त्रिः ॥ २६ ॥ पृथक्त्वेन तिसृभिः॥

अक्ष्णया संस्थाप्य ॥२७॥ अक्ष्णा कोणः । कोणेन समापनम् । कोणद्वित्वाद् द्वयो रेखयोः क्रिया । प्रतिरेखं सूक्तावृ-
त्तिः । संस्थाप्येति वचनं प्रतिरेखं व्रश्चनग्रहणं मा भूत् ॥ आव्रस्कात् पांशून् पलाश उपनह्य भ्राष्ट्रेऽभ्यस्य-
ति ॥२८॥ व्रश्चितात् पदात् पांशून् गृहीत्वा बधकपर्णे बद्ध्वा भ्राष्ट्रे लोकप्रसिद्धे क्षिपति । क्षेपणे मन्त्रः प्रधानव-
दभिधानात् ॥ स्फोटत्सु स्तृतः ॥२९॥ शब्दे पांशुषु 'मृतो द्वेष्यः' इति ज्ञेयम् । न चेदस्तृतः ॥ पश्चादग्नेः कर्ष्वां
५ कूद्युपस्तीर्णायां द्वादशरात्रमपर्यावर्तमानः शयीत ॥३०॥ पश्चादग्नेः कर्षू कूद्योपस्तृणाति । कूदी बदरी । द्वादशरा-
त्रमपर्यावर्तमानः शयीत इति प्राप्ते संवेशनेऽयं विधिः । भक्तस्याहुतेनेति प्रत्यहम् ॥ तत उत्थाय
त्रिरह्न उदवज्रान् प्रहरति ॥३१॥ ततः कर्ष्वां त्रिः उदवज्रान् क्षिपति । दिवसस्य त्रिः कर्मविधिः । नामधे-
यात् 'स्वयमिन्द्रस्यौज' [1] इति । 'यो व आपोऽपां' [2] 'यं वयम्' [3] 'अपामस्मै वज्रम्' [4] इति प्रहरणमन्त्राः । प्रत्यहमिद-
मङ्गकर्म ॥ नद्या अनामसंपन्नाया अश्मानं प्रास्यति ॥३२॥ यस्या नद्याः विशेषं नाम नास्ति तस्याः
१० अश्मानं गृहीत्वा प्रासनसंप्रत्ययात् । एतत् त्रिरह्नः प्रकरणात् । 'द्यावापृथिवी' [5] इति सूक्तेन 'दक्षि-
णा धावतः' [6] 'दक्षिणामुख' [7] इति वचनात् ॥ उष्णेऽक्षतसक्तूननूपमथितानुच्छ्वसन् पिबति । ३३।। उष्णे
स्थितः न सदसि । अक्षतसक्तून् स्वयं कृत्वाऽनाहतानुच्छ्वसन् पिबति कर्ता । अभिमन्त्र्य पिबति ॥
कथं त्रींस्त्रीन् कार्शींस्त्रिरात्रम् ॥३४॥ त्रींस्त्रीनेकैकस्मिन्नहनि त्रीण्यहानि ॥ द्वौ द्वौ त्रिरात्रम् ॥३५॥ 'अनुच्छ्वसन् पिबति' इत्या-
दि 'भक्तस्याहुतेन' इति च स्मर्तव्यम् ॥ एकैकं षड्रात्रम् ॥३६॥ एकैकं मुष्टिमहन्यहनि । एवं षडहानि । प्रत्यहं 'द्यावापृ-
१५ थिवी' [5] इत्यनुमन्त्रणम् ॥ एकादश दिवसानधिवास्य । द्वादश्याः प्रातः क्षीरौदनं भोजयित्वोच्छिष्टा-
नुच्छिष्टं बहुमत्स्ये प्रकिरति ॥३७॥ क्षीरौदनं भोजयति द्वेष्यं यथावचनं तच्च 'अशिशिषोः क्षीरौदनम्' [8] इति । तद् द्वये द्वे-
ष्यनिर्देशः । 'ब्राह्मणान्' [9] इति च कल्पान्तरवचनात् । नात्र मन्त्रः संनह्यवत्[10]। उच्छिष्टानुच्छिष्टं बहुमत्स्ये प्रकिरति । उच्छि-
ष्टं भोजनपात्रस्थम् । अनुच्छिष्टं कुम्भीस्थम् । बहवो यत्रोदके मत्स्यास्तत्र प्रकर्षेण क्षिपति ॥ संधावत्सु स्तृ-
तः ॥३८॥ यदि मत्स्याः पङ्क्तितो धावन्ति तदन्नं ततो 'मृतः शत्रुः' इति ज्ञेयम् । क्षीरौदनाभिमन्त्रणं च प्रकरणा-
२० त् सक्तुवत् ॥ लोहितशिरसं कृकलासं अमून् हन्मि इति हत्वा सद्यः कार्यो भाङ्गे शयने ॥३९॥ रक्तवर्णशिर-
सं च 'अमून् हन्मि' इत्यनेन मन्त्रेण मारयित्वा । सद्यः कार्यमिति वक्तव्यम् । आभिचारिकप्रकरणात् । उच्य-
ते । कर्मलिङ्गत्वादुत्तरेण कालसंप्रयोगार्थम् 'असौ' अपि सद्य एव यथा स्यात् । भाङ्गिके शयने कृकला-

सं करोति ॥ लोहितालंकृतं कृष्णवसनम् । श्वादि लोहितेनालंकृतं मण्डितम् । कृष्णवस्त्रपरिहितम् । अनूक्तं दहति ॥ ४० ॥ प्रकृतेन सूक्तेन । नात्र तन्त्रं
दहतिचोदनात् ॥ एकपदाभिरन्योऽनुतिष्ठति ॥४१॥ प्रकृतमेव । एकावसानाः कार्याः । अन्यः कर्ता । अ-
नुष्ठानं समूहनम् । सद्यः समानकालमेव दहनम् । अनुतिष्ठतिवचनं दाहोपचारार्थम् ॥ अङ्गशः सर्वंहु-
तमन्यम ॥ ४२ ॥ अन्यं 'लोहितशिरसं कृकलासं अमून् हन्मि इत्येवं हत्वा सद्यः कार्यः'[1] इत्यादिवचनात् ॥ पश्चा-
५ दग्नेः शरभृष्टीर्निधायोदग्व्रजत्या स्वेदजननात् ॥ ४३ ॥ पश्चादग्नेरिति देशसामान्यात् उत्तरतन्त्रे प्र-
वृत्ते । दीर्घाः शराः स्फाटिताः शरभृष्ट्यः स्थिताः । ताः शरभृष्टीः स्थापयित्वा उदङ्मुखो गच्छति । कायो
यावन्न स्विन्नस्तावद् व्रजति ॥ निवृत्य स्वेदालंकृता जुहोति ॥ ४४ ॥ स्वेदेन अभ्यक्ताः शरभृष्टीर्जुहोत्य-
ष्टौ[2] प्रत्यृचम् । तन्त्रमभ्यातानान्ते ॥ कोश उरःशिरोऽवधाय । अपनीतमांसास्थि कृकलासश-
रीरं कोशः । उरश्च शिरश्च उरःशिरः । तदुरःशिरः कोशे
१० प्रवेशयति । कृकलासस्योरःशिर इति प्रकरणात्[3] । पदात्पांशून् ॥ ४५ ॥ द्वेष्यस्य पादात् पांशून् कोशेऽव-
धाय ॥ पश्चादग्नेः । पांशूनधिकारात् । अवधायेति कोशे अहोमाग्नियुक्तस्य पुनः पुनः कर्म-
संबन्धात् । तन्नित्यमा विमोकात् । 'मृत्योरहम्'[4] इति च तस्मिन् व्रतग्रहणात् । लवणमृडीचीस्तिस्रोऽशीती-
र्विकर्णीः शर्कराणाम् ॥ ४६ ॥ कोशेऽवधाय । मृडीचीशब्दः अल्पपर्यायः । लवणरूपाः[5] कणा[6] इत्यर्थः । ति-
स्र इति संख्या । अशीतीरिति च । विकर्णीः शर्कराणाम् । चेति सामर्थ्यात् । विगतकर्णानां च शर्कराणां
१५ तिस्रोऽशीतीः कोशेऽवधाय ॥ विषं शिरसि ॥ ४७ ॥ कोशे शिरसि विषमवदधाति । असमासः लवणश-
र्कराणामिति । द्वन्द्वसंदेहात् विशेषणसंबन्धार्थं च ॥ बाधकेनावागग्रेण प्रणयन्नन्वाह ॥ ४८ ॥ व्या-
धिघातकदण्डेन अवागग्रेण प्रेरयन् मर्म प्रति । कोशमन्वाह प्रकृतेन सूक्तेन ॥ पाशे स[7] इति कोशे ग्र-
न्थीनुद्ग्रथ्नाति ॥ ४९ ॥ 'पाशे स बद्ध' इत्यर्धर्चेन भाङ्गानां ग्रन्थीनुद्ग्रथ्नाति पाशाकारान् । कथं तत्र दण्डेन अद-
ण्डः स्यात् । ततः प्रणयनमित्येवं कर्म । प्रथमं प्रणयनं कस्मात् । उच्यते । सूक्तेऽनूच्यमाने 'पाशे स' इत्यस्य क्रमः ।
२० कथम् । उद्ग्रथ्नातीत्यस्य च प्रणयनविधानम् । प्रथमगृहीतस्यानुवचनासंभवात् ॥ तद्देश एवा-
दानम् । तदनुवचनात् । आमुम्[8] इत्यादत्ते ॥ ५० ॥ 'आमुं दद' इत्यनेन गृह्णाति दण्डेन । ततो नाम ब्रू-
यात् । इह सूत्रन्यास उद्ग्रथितग्रहणं यथा स्यात् ॥ मर्माणि खादिरेण स्रुवेण गर्तं खनति ॥ ५१ ॥ म-

र्माणि मन्त्रोक्तानि । खदिरनिर्वृत्तः[1] खादिरः स्रुवः । तेन गर्तं खनति ॥ बाहुमात्रम्[2] ॥ बाहुः प्रमाणतः ॥
अतीव य[3] इति शरैरवज्वालयति ॥५२॥ गर्तं शरैः संतापयति मन्त्रलिङ्गात्[3] ॥ अवधाय । गर्ते कोशे प्रक्षि-
प्य । संचित्य लोष्टम् । संचयीकृत्य गर्ते लोष्टम् । स्रुवेण समोप्य ॥५३॥ खातात् पांशून् गर्ते कृत्वा ॥ अमुमुत्तै-
षम् इति[2] ॥ अनेन मन्त्रेण । उक्तावलेखनीम् ॥५४॥ अस्य सूक्तस्य 'प्रतिकृतिमावलेखनीम्'[4] इति वेधान्तं कर्म ॥
५ छायां वा ॥५५॥ द्वेष्यस्य दार्भ्यूषेण[4] विध्यति ॥ उपनिनयते ॥५६॥ द्वेष्यं समीपेनोदकेन मार्जयति ॥
अन्वाह ॥५७॥ भरद्वाजप्रवस्केन ॥ महावेदार्थविद उपाध्यायवत्सशर्मणः प्रपौत्रस्य भट्टदारिलकृतौ
कौशिकभाष्ये षष्ठेऽध्याये प्रथमा कण्डिका ॥ १ ॥ ॐ । भ्रातृव्यक्षयणम्[5] इत्यरण्ये सपत्नक्षयणीरादधा-
ति ॥ १ ॥ अरण्यमक्षेत्रादि । अश्वत्थाद्याः समिधः[6] संज्ञानिर्देशात् । 'अश्वत्थबधकताजद्भङ्गपरुषाह्वखदि-
रशराणाम्'[7] समिधः । तत्र विकल्पः । अन्तरे वा ॥ ग्राममेत्यावपति ॥ २ ॥ जनस्थानमागत्य व्रीहियवति-
१० लानामावपति[8] । तन्त्रविकल्पः । प्रत्यृचम् । दक्षिणाप्रवण[9] एव ॥ पुमान् पुंस[10] इति मन्त्रोक्तमभिहुतालंकृ-
तं बध्नाति ॥ ३ ॥ खदिराज्जातो अश्वत्थः । तन्मणिं बध्नाति । अभिहुतं कृत्वा । अभिहवनं स्रुवदण्डे बद्ध्वा होमः ।
अलंकरणं घृतेन । बन्धनमभिचरतः ॥ यावन्तः सपत्नास्तावतः पाशानिङ्गिडालंकृतान् संपातवतोऽनूक्ता-
न् ससत्रांश्चम्वां मर्माणि निखनति ॥ ४ ॥ यावतामभिचारं कर्तुमिच्छति तावतस्तत्परिमाणान्[11] पाशानिङ्गिडालंकृतान् सं-
पातवतः कुर्यात् प्रकृतेनैव सूक्तेन । अनूक्तान् संपातवतः कुर्यात् प्रकृतेनैव सूक्तेन । अनूक्तान् सह सूत्रेण संबद्धान् । चम्वां[12]
१५ कृत्वा मर्माणि निखनति । चमूः चरकी डिम्बिका ॥ नावि प्रैणान्[13] नुदस्व काम[14] इति मन्त्रोक्तं शाखया प्रणुदति ॥ ५ ॥ पूर्वसूक्ते-
न पाशान् सकृदिङ्गिडालंकृतान् कृत्वा अश्वत्थशाखया प्रेरयति नावम् ॥ तेऽधराञ्च[15] इति प्प्लावयति ॥ ६ ॥ अनया
ऋचा नावमुदकेन पूरयति ॥
बृहन्नेषाम्[16] इत्याद्यन्तं शप्यमानमन्वाह ॥ ७ ॥ द्वेष्यो यदाऽऽक्रोश्यमाणो अभिमुख आगच्छेत् तत अन्वाह ॥ वै-
कङ्कतेन[17] इति । स्रुवेण होमः । मन्त्रोक्तम् ॥ ८ ॥ ददिर्हि[18] इति साग्नीनि ॥ ९ ॥ कर्मातिदेशः । कानि तानि । अत्रोपाध्याय-
वत्सशर्मपादाः पठन्ति 'कृकलासशरभृष्टिसपत्नक्षयण्यावापमणिपाशमन्त्रोक्तहोमा-
२० नां साग्निकत्वात् । न संनहनक्षीरौदनौ[19] अग्निसंयोज्यमन्त्रत्वात् पदव्रश्चनं च तष्टुः संयोगात्' ॥
देशकपटु प्रक्षिणाति ॥१०॥ यत्र जातमहिच्छत्रकं तत्रैव विनाशयति सूक्तान्तेन ॥ तेऽवदन्[20] इति
नेतॄणां पदं वृश्चति ॥११॥ इत्यत्र अवयवग्रहणात् ब्राह्मणगोनेतॄणां पदानि वृश्चति । सूक्तेन विधानं 'भ्रा-

ष्टेऽभ्यस्यति'' [1] इत्येवमन्तम् ॥ अन्वाह ॥ १२ ॥ अथ चाऽन्वाह नेतॄन् ॥ ब्रह्मगवीभ्यामन्वाह ॥ १३ ॥ 'नैतां ते देवा' [2] इति सूक्ते एका ब्रह्मगवी । 'श्रमेण तपसा' [3] इत्यन्या । आभ्यां ब्रह्मगवीभ्यां नेतॄन् अन्वाह ॥ चेष्टाम् ॥ १४ ॥ अन्वाहेति शेषः । चेष्टा हरणमारणविकर्त्तनविशसनाधिश्रयणपचनभक्षणाद्या । द्वेष्यगव्यां या चेष्टा । ब्रह्मगव्यां या चेष्टा । समाख्यानात् । ब्रह्मगवीति मार्यमाणा इति च । तथा कल्पान्तरे हतगव्यामनुवचनसंयोगः । जीवन्त्या अ-
५ जीवन्त्या भोगसंयोगात् ॥ विचृतति ॥ १५ ॥ ऊवध्ये हविः कृत्वेत्यर्थः । काः क्रियाः । अन्वाह ॥ ऊवध्ये ॥ १६ ॥ द्वेष्यं मनसि कृत्वा सप्तमीनिर्देशात् ॥ श्मशाने ॥ १७ ॥ श्वपाकस्थाने ऊवध्यवत् ॥ त्रिः अमून् हनस्व इत्याह ॥ १८ ॥ त्रिरिति क्रियाभ्यावृत्तौ सुच्प्रत्ययः शब्दस्मृतेः [4] । ब्रह्मगवीभ्यां वक्तव्यम् । कल्पजासंबन्धाच्च । त्रिरिति संख्यायाः पूर्वाभिधानात् । 'अमून् हनस्व इति त्रिः' इत्येवं वक्तव्यम् । कल्पजया संबन्ध एतान् । 'अमून् हनस्व इत्याह' इति संबन्धः । 'रामं हनस्व रामं हनस्व' इति प्रदर्शनम् ॥ द्वितीययाश्मानमूवध्ये गूहयति ॥१९॥ ऊवध्यगोहे श्मशाने चोभयत्रानुवचनम् ॥ द्वादशरात्रं
१० सर्वव्रत उपश्राम्यति ॥ २० ॥ अश्मानं प्रास्य सर्वव्रत इत्यर्थः । प्राप्तनिवृत्तिः शक्त्यपेक्षया 'नातिशक्तिर्विधीयते' [5] इति वचनात् । उपश्राम्यतीति वचनाच्च ॥ द्विरुदिते स्तृताः ॥ २१ ॥ द्वादशरात्रादूर्ध्वं द्विः सवितरि उद्गते 'नष्टः शत्रुः' इति ज्ञेयम् । ततश्च नानुवचनं प्रयोजनाभावात् ॥ अवागग्रेण निवर्तयति ॥ २२ ॥ अवागग्रेण दण्डेनापनयत्यश्मानमूवध्यगोहाद् द्विरुदितान्ते ॥ उप प्रागात् [6] इति शुने पिण्डं पाण्डुं प्रयच्छति ॥ २३ ॥ 'उप प्रागात्' [6] इत्युदितार्थं यथान्तरवचनात् [7] । पिण्डो भक्तस्य पाण्डुः श्वेतगोलकः ॥ ताच्छं बध्ना-
१५ ति ॥ २४ ॥ आस्थिकमर्णि बध्नाति । अभिशस्तेऽभिचारो मन्त्रलिङ्गात् [8] ॥ जुहोति ॥२५॥ अथर्वाङ्गिरसीः ॥ आदधाति ॥ २६ ॥ न ताच्छं जुहोतिव्यवधानात् ॥ इदं तद्युजे [9] यत्किं चासौ मनसा [10] इत्याहिताग्निं प्रति निर्वपति ॥ २७ ॥ आहिताग्निं निर्वपन्तं प्रति निर्वपति । प्रतेर्लक्षणार्थत्वात् [11] । आहिताग्नेरुत्तरतो दक्षिणामुखत्वात् [12] कल्पान्तरे 'द्वेष्यस्योत्तरत' इति तद्वत् । पूर्वा व्यक्तचोदना । उत्तरा अऽव्यक्तचोदना । उभयोरव्यक्तचोदनात्वे जुहोतीति न स्यात् । इन्द्रोऽग्नीषोमौ पूर्वस्याभिचारिकं तन्त्रम् । पाकयज्ञियं तन्त्रमिति केचित् । पाकयज्ञशब्दस्य
२० गुणविधित्वात् । इन्द्रायाग्नीषोमाभ्यां जुष्टम् इति निर्वापः । अदारसृत् [13] इत्यवेक्षते [14] ॥ मध्यमपलाशेन फलीकरणान् जुहोति ॥ २८ ॥ पूर्वशेषान् । सूक्तेन तिङभिधानात् । नित्यं तन्त्रं सूक्तहेतुत्वात् ॥ निरमुम् [15] इत्यङ्गुष्ठेन त्रिरनुप्रस्तृणाति ॥ २९ ॥ तन्त्रं निर्वर्त्य । अनेन सूक्तेनाभिमन्त्र्याङ्गुष्ठेनाग्निं पश्चात्

त्रिगुणं प्रस्तृणाति ॥ शरं कच्चिण्डकोष्ठैरनुनिर्वर्तयति ॥३०॥ शरः शरमयं प्रस्तरणम् । कचुः तुट्टीकेति प्रसिद्धा-
भिधाना । इण्ड ओडेकः । कोष्ठं धान्यभाजनम् । एतेषामन्यतमेन निर्वर्तयति तमुत्तरवेदिस्थानात् पृ-
थक् करोति । पूर्वेण च होमः स्तरणादृते । अनुप्रस्तरणानुनिर्वापयोस्तु तन्त्रे प्रयोगार्थं प्रत्यक्षं विधानम् ॥
लोहिताश्वत्थपलाशेन विषावध्वस्तं जुहोति ॥३१॥ अनुनिर्वर्तितेऽग्नौ 'निरमुम्'[1] इति प्रत्यृचम् । एवमन्तमेकं क-
५ र्म । लोहिताश्वत्थो लोहिताश्वत्थः ॥ त्वं वीरुधाम्[2] इति मूत्रपुरीषं वत्सशेप्यायां कक्रचैरपिधाप्य बा-
धकेन संपिष्य निखनति ॥ ३२ ॥ वत्सस्य शेपसंवेष्टनं चर्म वत्सशेप्या । तस्यामन्तः मूत्रपुरीषं कृत्वा कक्र-
चैः तिमिरफलैः अजालेण्डिकाभिर्वा । तस्या मुखं पूरयित्वा बाधकेन संपिष्य संचूर्ण्य द्वेष्यस्य
मर्माणि निखनति । निखनने मन्त्रः ॥ शेप्यानडे ॥३३॥ शेप्याया नडे च मूत्रपुरीषपूर्णे ॥ शेप्यायाम् ॥३४॥ प्रवेश्य बाधकेन संपि-
ष्य निखनति ॥ यथा सूर्यं[3] इत्यन्वाह ॥३५॥ 'यथा सूर्यो नक्षत्राणाम्'[3] इत्यनया द्वेष्यानन्वाह ॥ उत्तरया[4]ऽऽ-
१० यांस्तान् पश्यति ॥३६॥ 'यावन्तो मा सपत्नानाम्'[4] इत्यनया आगच्छन् येषामनुवचनं कृतं तान् शत्रून्
पश्यति मन्त्रोक्तान् ॥ इन्द्रोतिभिः[5] अग्ने जातान्[6] यो नः स्तायद् दिप्सति[7] यो नः शपात्[8] इति वैद्युद्धतीः ॥३७॥ वि-
द्युता हतो वृक्षो विद्युद्धतः। तस्मात् निर्वृत्ता वैद्युद्धतीः । 'अरण्ये आदधाति । ग्राममेत्यावपति'[9] इत्येव । मन्त्रलिङ्गसामा-
न्यात् । 'यो नः स्तायत्'[7] 'यो नः शपात्'[8] इत्युभयोः समानादित्वात् क्रमभेदाच्च ॥ सान्तपना[10] इत्यूर्ध्वशुषीः ॥३८॥ ततो
राजा ऊर्ध्वशुषीरादधाति तिसृभिः ॥ ध्रंसशृतं पुरोडाशं ध्रंसविलीनेन सर्वंहुतम् ॥३९॥ उष्णप-
१५ क्वं पुरोडाशमातपविलीनेन नवनीतेन इङ्गिडं[11] कार्यम् । ध्रंसविलीनेन सर्वहुतम् । नावदानहोमः ॥ उ-
दस्य श्यावौ[12] इतीषीकाञ्जिमण्डूकं नीललोहिताभ्यां सूत्राभ्यां सकक्षं बद्ध्वोष्णोदके व्यादाय प्रत्याहुति मण्डू-
कमपनुदत्यभिन्युब्जति ॥४०॥ मुञ्जेषीकेव अञ्जिः रेषा यस्य स इषीकाञ्जिः । तं म-
ण्डूकं नीलेन लोहितेन च सूत्रेण सह बाहुभ्यां बद्ध्वा उष्णोदके क्षिपति । तत्रास्याऽऽस्यं व्यादाय विवृतं
२० कृत्वा । व्यापूर्वस्य ददातेश्चाऽऽस्यविहरणार्थत्वात् । प्रत्याहुति अग्नौ कृत्वाऽनन्तरं तयैवर्चा मण्डूकं नुदति ।
ततस्तयैवाऽभिन्युब्जत्युष्णोदकेन । तस्य अदर्शनं करोति । उभयत्र मन्त्रः प्रधानवदभिधानात् ॥

उपधावन्तमसदन् गाव[१] इति काम्पीलं संनह्य क्षीरोत्सिक्ते पाययति लोहितानां चैकशम् ॥४१॥ आस्वादयतां श-
त्रूयतां प्रकृताभिचारशान्तिरियम् ॥ अशिशिषोः क्षीरौदनम् ॥४२॥ भोजयित्वा 'उच्छिष्टानुच्छिष्टम्'[२] इत्य-
तः कर्म । एकदेशग्रहणात् 'उदस्य श्यावौ'[३] इत्यस्य सूक्तस्याऽऽभिचारिकप्रकरणात् । 'असदन् गाव'[१]
इति चास्य प्रकृताभिचारशान्त्यर्थत्वात् । त्रीणि प्रकरणात् ॥ आमपात्रमभ्यवनेने-
५ क्ति ॥४३॥ पार्थिवमपक्वभाजनम् । 'उदस्य श्यावौ'[३] इति शत्रुमभ्यवनेनेक्ति प्रक्षालयति । अस्य
च प्रधानकर्मत्वे ज्ञापकमशिशिषोः क्षीरौदनादीनि ॥ इति ॥ महावेदार्थविद उपाध्या-
यवत्सशर्मणः प्रपौत्रस्य भट्टदारिलकृतौ कौशिकभाष्ये षष्ठेऽध्याये द्वितीया कण्डिका
समाप्ता ॥ भग्नपृष्ठिकटिग्रीवः स्तब्धदृष्टिरधोमुखः । कष्टेन लिखितं ग्रन्थं यत्नेन परि-
पालयेत् ॥ १ ॥ शके १७६२ शार्वरीनामसंवत्सरे आषाढशुक्लत्रयोदश्यां रविवासरे समाप्तोऽ-
१० यं ग्रन्थः । ग्रन्थसंख्या ३७९० । शुभं भवतु ॥ ॥ ॥

# Appendix A

## Critical notes, references etc.

**References are made to page and note. Abbreviations are given elsewhere.**

1\. 1 KS 25.1–2 अथ भैषज्यानि । लिङ्-ग्युपतापो भैषज्यम् ।

2 AV 1.3.1ab विद्मा शरस्य पितरं पर्जन्यं शतवृष्ण्यम् ।

3 AV 1.3.2

4 Pañcapaṭalikā 3.1 आर्षी या पार्षदे पूर्वं प्रोक्ता ।

5 AV 3.10.10 ऋतुभ्यष्ट्वार्तवेभ्यो माद्भ्यः संवत्सरेभ्यः । धात्रे विधात्रे समृधे भूतस्य पतये यजे । KS 138.6 however reads ऋतुभ्यस्त्वेति विग्राहमष्टौ ।

6 AV 11.3.32

7 AV 11.6.1

8 ,, 11.6.23

9 ,, 11.6.2 In respect of notes 7 to 9, Dārila wants to suggest that AV 11.6.23 is to be joined to each of the verses in 11.6 including the last one.

2\. 1 AV 3.10.8

2 ,, 3.10.9

3 ,, 3.10.13

4 ,, 3.10.12

5 ,, 10.5.1

6 KS 49.2–4 आश्वत्थीरवपन्ना: । स्वयमिन्द्रस्यौज इति प्रक्षालयति । जिष्णवे योगायेत्यपो युनक्ति ।

7 KS 1.2

8 ,, 1.7–8

9 AV 6.108

10 ,, 12.1.53

11 KS 10.20

3\. 1 KS 8.7

2 AV 4.31–32; cf KS 14.26

3 ,, 4.7

4 KS 10.1

5 ,, 7.15

3. 6 AV 2.7
   7 „ 1.6
   8 „ 6.85
   9 „ 6.109
   10 „ 6.127
   11 „ 8.7
   12 KS 26.33
   13 „ 4.11
   14 „ 19.28
   15 „ 8.21
   16 cf KS 7.21; 28.16
   17 cf P 1.4.49 कर्तुरीप्सिततमं कर्म ।
   18 JS 4.3.15 स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात् । cf Śabara on this : ... सर्वे हि पुरुषाः स्वर्गकामाः । कुत एतत् । प्रीतिर्हि स्वर्गः । सर्वश्च प्रीतिं प्रार्थयते ।

4. 1 KS 25.1
   2 „ 7.1
   3 AV 12.1.19–21
   4 KS 2.41
   5 AV 6.133.4–5
   6 cf KS 56.1 श्रद्धाया दुहितेति द्वाभ्यां भाद्रमौञ्जीं मेखलां बध्नाति ।
   7 AVP 19.51.1–4
   8 KS 42.15–16
   9 AV 1.4; cf KS 9.1
   10 KS 10.1
   11 „ 11.1
   12 „ 11.7
   13 „ 11.11
   14 „ 12.4
   15 „ 12.5
   16 „ 12.10
   17 „ 14.1
   18 KS 18.1
   19 „ 32.28
   20 „ 37.1
   21 „ 38.1
   22 „ 47.1
   23 „ 50.1 स्वस्तिदा ये ते पन्थान इत्यध्वानं दक्षिणेन प्रक्रामति ।
   24 KS 52.18
   25 „ 59.1 विश्वे देवा इति विश्वानायुष्कामो यजते ।
   26 KS 60.1 अग्नीनाधास्यमानः सवान् वा दास्यन् संवत्सरं ब्रह्मौदनिकमग्निं दीपयति ।
   27 KS 69.1 पित्र्यमग्निं शमयिष्यञ्ज्येष्ठस्य चाविभक्तिन एकाग्निमाधास्यन् ।
   28 KS 75.1
   29 „ 80.1 अथ पितृमेधं व्याख्यास्यामः ।

4. 30 The number 21 is made up of the विधिs beginning with that prescribed in KS 9.1-9 and ending with that prescribed in KS 80.1

31 cf DB *p*. 2 *l*. 14 अथवा त्रीणि प्रमाणानि अत्र, प्रत्यक्षमनुमानमागम इति ।

5. 1 cf TA 1.2 स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।

2 Manu 12.105

3 KS 7.2

4 „ 7.15

5 cf KS 35.6 युगतर्म्मना संपातवन्तं द्वितीयम् ।

6 cf TS 6.1.11.6 यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एव सः or MS 1.6.10 यदग्नीषोमीयं पूर्णमासे हविरासीत्...पूर्वेद्युः पशुमालभन्त ।

7 KS 10.2

8 „ 9.9

9 „ 14.2-4

10 AV 1.30

11 KS 59.1

6. 1 KS 10.2

2 AV 6.108

3 „ 12.1.53

4 KS 10.20

5 „ 11.11

6 „ 41.8

7 „ 37.1

8 „ 23.17; 24.36

9 „ 45.8

10 „ 6.29

11 „ 72.43 अथ प्रातरुत्थायाग्निं निर्मथ्य यथास्थानं प्रणीय यथापुरमग्निहोत्रं जुहुयात् ।

12 KS 59.1 विश्वे देवा इति विश्वानायुष्कामो यजते ।

13 KS 74.13 आग्रयणे शान्त्युदकं कृत्वा यथर्तु तण्डुलानुपसाद्य ।

14 KS 75.1 अथ विवाहः ।

15 „ 10.1

16 cf KS 60.1 अग्नीनाधास्यमानः सवान् वा दास्यन् ।

17 AV 4.30

18 KS 10.16

19 „ 66.19; AV 9.7

20 „ 67.6

21 cf KS 60.1 संवत्सरं ब्रह्मौदनिकमग्निं दीपयति ।

22 KS 26.1; AV 1.12.4

23 „ 25.2

24 AV 2.4

25 KS 42.23

6. 26 AV 2.4.6
27 KS 18.1
28 „ 87.1 अथ पिण्डपितृयज्ञः ।
29 „ 90 1 मधुपर्कमाहारयिष्यन् दर्भा॰ नाहारयति ।
30 KS 18.6
31 „ 1.30
32 cf KS 75.1 अथ विवाहः ।
33 GDS 5.7 तस्मिन् गृह्याणि कर्माणि ।
34 AV 9.6.30a योऽतिथीनां स आहवनीयः ।

7. 1 cf AV 9.6.30b यो वेश्मनि स गार्हपत्यः ।
2 GDS 5.23
3 AV 9 6
4 „ 9.6.13
5 „ 9.6.31
6 AV 9.6.38
7 cf KS 47.1 and so on.
8 KS 47.2
9 „ 60.10 तस्मिन् यथाकामं सवान् ददाति एकं द्वौ सर्वान् वा ।
10 cf KS 20.10 ... पुरोडाशेनेन्द्रं यजते ।
11 KS 2.15
12 „ 73,9 परिमृष्टे परिलिप्ते च पर्वणि व्रातपतं हावयेदन्नमग्नौ । भूयो दत्त्वा स्वयमल्पं च भुक्त्वाऽपराह्णे व्रतमुपैति याज्ञिकम् ।
13 cf KS 6.23 अन्वाहार्यं ब्राह्मणान् भोजयति ।
14 KS 30.16
15 „ 56.5 अथैनं व्रतादानीयाः समिध आधापयति ।
16 KS 5.12
17 AV 6.128.3
18 KS 138.8
19 cf KS 2.31
20 KS 76.21–22 सप्त मर्यादा इति...
21 cf KS 138.1–2 अष्टकायामष्टकाहोमाञ्जुहुयात् । तस्या हवींषि धानाः... यथोपपादिपशुः ।
22 KS 11.1
23 cf ṚV 7.1.23d यं सूरिरर्थी पृच्छमान एति ।

8. 1 KS 2.6
2 „ 5.12
3 cf paribhāṣenduśekhara 1.17 एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ।
4 cf KS 72.25 अपरेद्युरग्निं चेन्द्राग्नी च यजेत । KS 2.3; 2.25
5 cf VārahaŚS 1.1.1.67 प्रत्याम्नाय॰ प्रतिषेधार्थलोपः ।

8. 6 cf KS 3.15; 47.8
7 „ „ 138.2
8 „ „ 55.5 लौकिकं च समानमा परिधानात् ।
9 KS 6.30
10 „ 45.19
11 „ 137.43
12 „ 55 5–7
13 „ 63 10
14 „ 59.1
15 AV 6.108
16 „ 12.1.53
17 KS 10.20
18 AV 5.3
19 cf KS 1.33
20 KS 8.21
21 AV 6.56
22 „ 7.56.5
23 AV 10.4
24 „ 12.1.46
25 „ 1.13
26 KS 139.8 ... आरेऽसावस्मदस्तु यस्ते पृथुः स्तनयित्नुरिति संस्थाप्य होमान् ।
27 AV 1.26
28 „ 7.11
29 „ 1.5
30 „ 10.5.23
31 „ 1.32
32 KS 6.17

9. 1 AV 7.72
2 „ 1.20
3 KS 2.39-40
4 AV 1.34
5 KS 76.8 ... लाक्षारक्तेन सूत्रेण विग्रथ्यानामिकायां बध्नाति ।
6 AV 6.10
7 KS 9.3
8 „ 6.14
9 „ 38.2
10 AV 3.16
11 „ 6.125
12 „ 9.1; 19.3
13 KS 10.24
14 AV 5.1-2
15 KS 15.1
16 AV 5.2.4
17 KS 15.6
18 „ 8.21
19 AV 5.1.3
20 KS 21.12
21 „ 22.1
22 AV 19.59
23 „ 19.52

## Appendix A

9. 24 KS 6.37
25 AV 6.51
26 KS 25.20
27 cf KS 18.25
28 KS 24.46
29 AV 5.13
30 KS 29.1
31 „ 29.6
32 AV 4.38.5-7
33 KS 21.11
34 „ 4.11
35 AV 5.3
36 KS 49.15...अभिमन्त्र्योपनिदधाति ।
37 AVP 5.31.1-3
38 KS 62.20-21
39 „ 3.4

10. 1 AV 16.9.3-4
2 KS 6.16
3 AV 19.59
4 „ 19.52
5 KS 6.37
6 „ 7.15
7 „ 7.16
8 cf KS 7.18
9 „ „ 7.7
10 KS 8.6
11 P 1.3.25 उपान्मन्त्रकरणे ।
12 cf KS 8.23
13 KS 49.15 ममाग्ने वर्चं इति बृहस्पति-शिरसं पृषातकेनोपसिच्याभिमन्त्र्योप-निदधाति ।
14 cf KS 6.30
15 KS 67.6
16 „ 59.27
17 „ 55. 6–7
18 „ 80.1
19 cf Śrautakośa (Vol.I Sanskrit, *p.* 808 ): आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च इति विज्ञायते quoting Baudhāyana Pitṛmedha 2.4; obviously it is a Brāhmaṇa text, perhaps going back to ŚB 12.3.5.2 ... यद्यु म्रियते स्वैरेव तमग्निभिर्दहन्ति ।
20 KS 9.8
21 cf KS 8.25; 8.24
22 cf Manu 12.105 प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ।
23 KS 1.8
24 Vaiśeṣikasūtra 1.1.3

11. 1 GB 1.1.1
2 AV 9.1.24
3 „ 8.10

11. 4 cf TS 1.5.9.1 अग्निहोत्रं जुहोति यदेव किञ्च यजमानस्य स्वम् ...
 5 KS 2.1
 6 „ 2.15
 7 „ 2.21
 8 AVP 5.31.1–3
 9 KS 62.20
 10 „ 17.1
 11 cf HŚS 6.1.8 ... द्रव्यप्रकल्पनं यजमानस्य दक्षिणादानं ब्रह्मचर्यं जपाश्च । प्रत्यगाशिषो मन्त्रानकर्मकरणाञ्जपति ।

12. 1 AV 8.10.18
 2 GB 1.2.8
 3 cf Nir 14.33
 4 AV 9.10.11
 5 „ 9.10.16
 6 AV 5.2.1
 7 P 5.3.23 प्रकारवचने थाल् ।
 8 AV 8.10
 9 „ 9.6
 10 „ 15.1
 11 „ 15.4.5
 12 cf KS 1.9.1
 13 AV 8.9.1
 14 „ 10.2.1
 15 „ 10.7.1
 16 „ 10.8.1
 17 „ 11.5.1
 18 „ 11.7.1
 19 „ 11.8.1
 20 KS 1.8
 21 cf JS 1.6.3.3 विरोधे त्वनपेक्षं स्यात् ।
 22 cf P 2.3.61 प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने and 62 चतुर्थ्यर्थे बहुलं छन्दसि ।
 23 cf Dhp 1002 यज देवपूजासंगतिकरणदानेषु ।
 24 KS 42.12
 25 „ 87.1 अथ पिण्डपितृयज्ञः।
 26 „ 87.8 इदमग्नये कव्यवाहनाय स्वधा पितृभ्यः पृथिविषद्भ्य इतीदं सोमाय पितृमते स्वधा पितृभ्यः सोमवद्भ्यः पितृभ्यो वान्तरिक्षसद्भ्य इतीदं यमाय पितृमते स्वधा पितृभ्यश्च दिविषद्भ्य इति त्रीनवाचीनकाशीन् निर्वपति ।

13. 1 GobhilaGS 1.2.1 यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव ।

13.2 cf KS 87.26 अतो यज्ञोपवीती पित्र्युपवीती बर्हिर्गृहीत्वा विचृत्य संनहनं दक्षिणापरमष्टमदेशमभ्यवास्येत् ।
3 AV 12.3.55
4 KS 4.9
5 P 2.2.26 दिङ्नामान्यन्तराले ।
6 KS 137.36 प्रदक्षिणं बर्हिषां मूलानि छादयन्नोत्तरस्या वेदिश्रोणेः पूर्वोत्तरतः संस्थाप्य ।
7 KS 137.10 वि मिमीष्व पयस्वतीमिति मिमानमनुमन्त्रयते ।
8 KS 137.12 यत्ते भूम इति विखनति ।
9 „ 137.13 यत्त ऊनमिति संवपति ।
10 „ 137.15 बृहस्पते परि गृहाण वेदिमित्युत्तरवेदिमोप्यमानां परिगृह्णाति ।
11 KS 137.16 असंबाधं बध्यतो मानवानामिति प्रथयति ।
12 KS 137.17 यस्याश्चतस्रः प्रदिशः पृथिव्या इति चतुरस्रां करोति ।
13 KS 137.30 अग्निर्भूम्यामोषधीष्वग्निर्दिव आ तपत्यग्निवासाः पृथिव्यसितज्रूरेतमिद्मं समाहितं जुषाणोऽस्मै क्षत्राणि धारयन्तमग्न इति पञ्चभिः स्तरणम् ।
14 KS 137.32 त्वं भूमिमत्येष्योजसेति दर्भान् संप्रोक्ष्य ।
15 KS 8.6
16 „ 138.14 सर्वा एव यज्ञतनूरवरुन्धे सर्वा एवास्य यज्ञतनूः पितरमुपजीवन्ति य एवमष्टकामुपैति ।
17 KS 1.17
18 „ 80.37 प्रजानत्यघ्न्य इति जघन्यं गामेधमग्निं परिणीय ।

14.1 cf P 1.2.34 यज्ञकर्मण्यजपन्यूङ्खसामसु and 35 उच्चैस्तरां वा वषट्कारः ।
2 KS 4.11
3 AV 18.4.71
4 KS 18.4.73
5 „ 12.3.31
6 cf AV 12.3.31b
7 Dhp 1418
8 KS 4.10

15.1 cf ŚāṅkhBr 3.1 यद्यजते तेनोत्तराम् ।
2 KS 1.31
3 Nir 11.31 सिनीवाली । सिनम् अन्नं भवति सिनाति भूतानि । वालं पर्व । वृणोतेः । तस्मिन् अन्नवती वालिनी वा ।
4 cf VaitānaŚS 3.17; 4.21

16.1 cf BhārŚS 4.15.16 : अथैकपर्वं संस्थाप्य पर्व सद्यस्कालमिष्टिं निर्वपति । The word सद्यस्काल is included in कस्कादिगण (cf P 8.3.48)

16.2 KS 22. 4; also VaitānaŚS 1.11–
यजमानोऽमावास्यायां पूर्वेद्युरुपवत्स्यद्भक्त-
मश्नात्यपराह्णे ।
3 AV 5.3.1
4 KS 73.11 ... आग्नेयं तु पूर्वं नित्य-
मन्वाहार्यं प्रजापतेः ।
5 AV 7.74.4
6 KS 56.5 अथैनं व्रतादानीयाः समिध
आधापयति।
7 KS 8.22
8 P 3.4.21 समानकर्तृकयोः पूर्वकाले ।
9 KS 7.22
10 „ 74.13 आग्रयणे शान्त्युदकं कृत्वा
यथर्तु तण्डुलानुपसाद्य ।
11 KS 2.27
12 „ 2.1

17.1 AVP 12.5.3
2 KS 20.10
3 KS 42.12
4 „ 48.27
5 „ 59.25 दोषो गायेत्यथर्वाणं समावृत्या-
श्नाति ।
6 cf KS 73.11
7 KS 2.4
8 „ 1.36
9 AV 12.3.13
10 KS 8.14
11 AV 10.6.3
12 KS 8.13

18.1 KS 72.24
2 cf VaitānaŚS 2.2 प्रणीतासु प्रणीय-
मानासु वाचं यच्छत्या हविष्कृत उद्वाद-
नात् ।
3 P 3.4.21 समानकर्तृकयोः पूर्वकाले ।
4 AV 11.1.16
5 „ 11.1.17
6 KS 11.1.18
7 „ 7.71.1
8 KS 1.4
9 „ 2.2
10 DB *p*.14, *ll*. 10-12

19.1 AV 16.2.6
2 KS 137.2...अग्नेरुत्तरवेदिः ।
3 VaitānaŚS 1.17 अथ ब्रह्माणं वृणीते
'भूपते भुवनपते भुवां पते महतो भूतस्य
पते ब्रह्माणं त्वा वृणीमहे' (TBr 3.7.6.1)
इति।
4 VaitānaŚS 1.18 वृतो जपति 'अहं भूपतिः...
ओं भूर्भुवः स्वर्जनदो३म् ' इति अप्रति-
रथं च ।
5 AV 7.99.1
6 KS 1.4
7 cf KS 24.25
8 KS 16.31

19.9 cf KS 73.14 यथाशक्ति यथाबलं हुतादोऽन्ये अहुतादोऽन्ये । वैश्वदेवं हविरुभये संचरन्ति ।
10 KS 72.27 सायंप्रातर्व्रीहीनावपेद् यवान् वाऽग्नये स्वाहा प्रजापतये स्वाहेति ।
11 KS 90.1 मधुपर्कमाहारयिष्यन् दर्भानाहारयति ।
12 KS 73.9 परिमृष्टे परिलिप्ते च पर्वणि व्रातपतं हावयेदन्नमग्नौ । भूयो दत्त्वा स्वयमल्पं च भुक्त्वापराह्णे व्रतमुपैति याज्ञिकम् ।
13 KS 93.1 अथाद्भुतानि ।

20.1 KS 67.6 सवान् दत्त्वाऽग्नीनादधीत ।
2 cf KS 3.10
3 KS 2.31
4 cf AVP 5.16.3 with रोह for सीद.
5 KS 2.31
6 KS 2.35
7 AV 1.20
8 „ 7.72. 1-3
9 „ 12.1. 19-21
10 „ 7.78.2
11 „ 10.6.35

21.1 TS 1.6.2.1. Dārila places this passage at the end of the second Kaṇḍikā.
2 KS 137.28 विश्वंभरा वसुधानी प्रतिष्ठेति लक्षणे प्रतिष्ठाप्य ।
3 KS 137.43 व्याख्यातं सवपाकयज्ञियं तन्त्रम्।
4 „ 137.29
5 „ 53.4 परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिः...
6 AV 19 69. 1-4
7 „ 12.1.1-9
8 „ 12.1.59
9 AV 3.31.10
10 KS 24.31
11 „ 15.4
12 AV 12.1.29

22.1 KS 140.1 अथ राज्ञामिन्द्रमहस्योपाचारकल्पं व्याख्यास्यामः ।
2 KS 6.9
3 „ 80.29 ... पुरस्ताद्धोमसंस्थितहोमानुद्धृत्य ।
4 KS 6.34
5 AV 4.39 10
6 cf KS 80.29
7 KS 4.5
8 „ 4.6
9 „ 14.1
10 „ 17.34
11 „ 47.1

22.12 अमुष्य इत्यस्य स्थाने राज्यवर्धनस्येत्यूहः।
13 AV 4.39.9
14 „ 4.39.10
15 „ 5.29.1
16 „ 2.35.5
17 KS 4.19

23.1 KS 3.16; AV 4. 39.9-10
2 „ 4.1
3 AV 7 97
4 KS 6.3
5 „ 5.7
6 „ 7.15
7 „ 7.16
8 AV 2.19-23
9 KS 47.8
10 AV 5.29.2, 3
11 KS 47.9
12 AV 6.75
13 KS 47.10
14 AVP 19.52.6
15 KS 4.12
16 AVP 1.51.3
17 KS 4 9
18 „ 2.1
19 „ 4.6

24.1 KS 4.11
2 cf KS 19.29
3 KS 138.3 अष्टकायामष्टकाहोमाञ्जुहुयात्।
4 KS 5.10
5 „ 6.34
6 AV 6.5.1
7 KS 4.3
8 Pañcapaṭalikā 1.1
9 KS 4.2

25.1 KS 4.3
2 cf P 3.2.56,57
3 AV 6.54.2
4 ṚV 1.93.9
5 KS 4.9; AV 6.5.1
6 „ 4.11

26.1 KS 4.8
2 cf KS 59.21 य ईशे ये भक्षयन्त इती॰न्द्राग्नी लोककाम: ।
3 KS 5.10
4 AV 7.80.1; 7.79.1; KS 5.5-6
5 KS 5.7
6 AV 4.39.1; KS 5.8
7 KS 3.19
8 cf KS 73.12 अर्धाहुतिस्तु सौविष्टकृती सर्वेषां हविषां स्मृता। आनुमती वा भवति स्थालोपाकेष्वथर्वणाम्।

26.9 KS 6.34

10 cf Nir 7.1 अथातो दैवतम्। तत् यानि नामानि प्राधान्यस्तुतीनां देवतानां तत् दैवतमित्याचक्षते। सा एषा देवतोपपरीक्षा। यत्कामः ऋषिः यस्यां देवतायामार्थपत्य- मिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति।

11 KS 6 30

12 AV 7.79.1

13 KS 93.1 अथाद्भुतानि।

14 cf KS 94.7 त्रीणि पर्वाणि कर्मणः पौर्णमास्यमावास्ये पुण्यं नक्षत्रम्।

15 KS 25.1

16 „ 18.6

17 cf KS 16.4

27.1 KS 3.19

2 AV 4.39

3 „ 7.80.3

4 KS 5.4

5 „ 5.11

6 „ 4.6

7 „ 6.34

8 AV 7.67

9 KS 45.17-18

10 AV 7.106

28.1 AV 7.97.1-8

2 „ 7.97.8

3 KS 3.18

4 cf KS 1.36

5 AV 7.98.1

6 cf Nir 7.10 अथैतानि इन्द्रभक्तीनि।

7 AVP 20.34.2

8 KāṭhakaS 31.14

9 AVP 13.10.1

10 AV 7.89.4

11 „ 10.5.25

12 KS 8.25

29 1 AV 10.5.37-41

2 KS 1.26

3 AV 16.9.3

4 cf Sāyaṇa's introduction to AV 16.6 : 'अगन्म स्वः' इत्यवसानद्वयेन आदित्यमीक्षते सर्वेषु तन्त्रेषु।

5 AV 16.6.1; cf KS 49.19-24

6 AV 1.5

7 „ 10.5.23

8 „ 1.32.1

9 cf KS 1.27; 2.28

10 „ „ 42.17

11 „ „ 3.4

30.1 KS 73.13

2 KS 59.1

3 „ 59.2

4 „ 58.1 भद्राय कर्णः क्रोशतु... (AVP 20.50.6-8) इति कर्णं क्रोशन्तमनुमन्त्रयते।

5 KS 10.9
6 ,, 6.20
7 ,, 8.13
8 ,, 6.30

31.1 cf VaitānaŚS 4.27 एताभ्यामिष्टयो व्याख्याता:; 8.4 ओषधीषु पक्वास्वाग्र-यणेष्टि: ।
2 cf KS 7.1
3 KS 73.11
4 AV 12.3.73; cf KS 8.14
5 KS 2.1
6 cf KS 2.1
7 ,, ,, 2.5
8 ,, ,, 2.2-3
9 KS 73.11
10 ,, 2.5

11 KS 6.30
12 ,, 1.10
13 ,, 10.2

32.1 KS 73.13 उभौ च संधिजौ यौ वै वैश्वदेवौ यथर्त्विजौ। वर्जयित्वा सर्बाहिष: साज्या यज्ञाः सदक्षिणाः ।
2 AV 11.1.16
3 cf KS 2.7
4 AV 7.71.1
5 KS 2.10
6 ,, 2.36
7 ,, 2.37
8 cf KS 2.38
9 These two verses are not found in the extant GB.
10 P 1.4.96 अपि: पदार्थसम्भावनान्ववसर्ग-गर्हासमुच्चयेषु ।

33.1 KS 1.33
2 ,, 42.15
3 ,, 59.25 दोषो गायेत्यथर्वाणम्...
4 ,, 73.11
5 ,, 6.29
6 ,, 6.31
7 AV 19.59.1
8 ,, 19.52.1
9 ,, 1.4
10 ,, 6.51
11 KS 25.20
12 AV 19.59.1-3
13 KS 1.1
14 AV 6.7

34.1 KS 46.4
2 ,, 11.20
3 ,, 19.7
4 cf KS 7.6
5 KS 72.19 षट्संपातम्...

34.6 KS 18.19
7 cf KS 25.1
8 AV 6.10.1
9 KS 12.3
10 „ 18.34
11 AV 4.14.5
12 „ 11.1.36
13 KS 63.9
14 „ 2.27
15 „ 10.4
16 cf KS 4.11
17 AV 6.51
18 KS 25.20
19 AV 19.59
20 „ 19.52
21 KS 6.37
22 „ 16.14
23 „ 71.2
24 „ 10.1

35.1 KS 28.1
2 cf MS 1.10.1; HŚS 5.6.1 वायव्या यवागूः प्रतिधुक् वा। Mahādeva, in his commentary, *vaijayantī* explains : प्रतिधुक् धारोष्णं पयः । तत्रैव रूढिलिङ्गं च।
3 AV 1.1
4 P 5.2.59
5 KS 10.1
6 „ 18.1
7 „ 18.19
8 „ 25.4
9 „ 32.28
10 „ 16.5
11 AV 1.27.5
12 KS 139.10 अव्यचसश्चेति जपित्वा सावित्रीं ब्रह्म जज्ञानमित्येका...
13 cf *Mahābhāṣya* on P 7.1.95, 96
14 KS 139.11
15 AV 6.3.1
16 KS 50.4 आरेऽमूः पारे पातं नो य एनं परिषीदन्ति यदायुधं दण्डेन व्याख्यातम् ।
17 KS 7.15
18 „ 27.7
19 AV 5.22
20 KS 29.18
21 „ 32.16
22 „ 8.6

36.1 P 5.3.27
2 „ 5.3.28
3 The two parts of the complete quotation remain untraced.
4 AV 1.4
5 „ 1 5; 1.6
6 „ 6.24
7 „ 3.13

36·8 AV 6.22
9 „ 6.23
10 „ 6.24
11 „ 6.51
12 KS 46.29
13 „ 27.7-8
14 AV 5.2.3
15 KS 21.21
16 „ 10.2

37.1 KS 32.29
2 „ 10.7
3 „ 54.11 यथा द्यौर्मनसे चेतसे धिय इति महाव्रीहीणां स्थालीपाकं श्रपयित्वा... प्राशयति।
4 KS 35.6
5 P 2.4.26
6 AV 1.25.1
7 KS 26.25
8 KS 28.15
9 AV 6.10.5
10 „ 7.107
11 KS 31.27
12 „ 26.18-19
13 „ 50.16
14 „ 17.9
15 „ 19.22
16 „ 41.13
17 KS 19 25
18 P 3.4.71 आदिकर्मणि क्तः कर्तरि च ।
19 AV 17.1
20 KS 55.17 अस्मिन् वसु वसवो धारयन्तु विश्वे देवा वसव आ यातु मित्रोऽमुत्र-भूयादन्तकाय मृत्यव आ रभस्व प्राणाय नमो ...
21 AV 6 10
22 KS 12.3
23 KS 7.16

38.1 P 1.4.54 स्वतन्त्रः कर्ता and 55 तत्प्रयोजको हेतुश्च।
2 P 2.2.34 अल्पाच्तरम्।
3 KS 7.16
4 P 3.3.169 अर्हे कृत्यतृचश्च।
5 KS 47.32
6 „ 27.7; 32.14
7 „ 42.16
8 „ 10.24
9 AV 1.15.1
10 KS 19.4
11 AV 4.21.1
12 KS 21.8
13 „ 22.5
14 AV 6.45
15 „ 6.46
16 KS 46.9

39.1 Atharva-Pariśiṣṭa 43.3.1
2 GobhilaGS 1.2.2
3 KS 69.3...ज्येष्ठोऽन्वालभते।
4 cf KS 138.15 न दर्विहोमें न हस्तहोमे न पूर्णहोम तन्त्रं क्रियेतेत्येके।
5 KS 23.12
6 ,, 25.36
7 cf Atharva-Pariśiṣṭa 36.1.5
8 ,, KS 7.15
9 AV 1.21
10 ,, 7.55
11 KS 51.7 ब्रह्म जज्ञानं भवाशर्वावित्यासन्नम् ...
12 KS 51.2 निनयनं समुह्य चारे सारूपवत्सस्य ...
13 P 1.3.25 उपान्मन्त्रकरणे।
14 KS 1.10
15 cf KS 25.36
16 KS 10.16
17 cf KS 53.2 अमम्रिमोजोमानीं दूर्वामकर्णमश्ममण्डलमानडुहशकृत्पिण्डं षड्दर्भप्रान्तानि कंसमहते वसने शुद्धमाज्यं शान्ता ओषधीर्नवमुदकुम्भम् and KS 53.17 आयमगन् सविता क्षुरेणेत्युदपात्रमनुमन्त्रयते।
18 KS 59.1-2
19 ,, 6.21
20 ,, 6.23-25

40. 1 KS 7.9
2 ,, 63.17 समुच्चयस्तुल्यार्थानां विकल्पो वा।
3 KS 8.21
4 ,, 2.39; AV 1.20
5 ,, 140.10 अभिभूर्यज्ञ(AV 6.97-99) इत्येतैस्त्रिभिः सूक्तैरन्वारब्धे राजनि पूर्णहोमं जुहुयात्।
6 KS 14.17; AV 3.2
7 ,, 14.26; AV 4.32
8 AV 6 104
9 KS 11. 19
10 AV 10.7
11 KS 16.6; AV 6.103-104
12 ,, 16.21; AV 11.9-10
13 ,, 16.27
14 ,, 14 7; AV 6.65-66
15 ,, 14.24; AV 4.22-23
16 ,, 47.2
17 ,, 7.12
18 ,, 11.4
19 ,, 25.13
20 AV 1.3
21 KS 25.12
22 AV 5.11
23 KS 12.1-2

41.1 AV 5.6.1
2 KS 28.15
3 ,, 11.12-15: cf DB *p.* 50, *ll.* 17-18
4 ,, 27.10
5 ,, 10.13
6 AV 12.3.31
7 KS 1.24
8 ,, 18.33
9 ,, 25.37
10 AV 10.6.1
11 ,, 10.6.3
12 AV 12.3.13
13 cf KS 1.3
14 KS 53.3 बाह्यत:... उपसमाधाय ।
15 ,, 13.5
16 ,, 9.9

42.1 KS 32.29
2 ,, 16.1
3 KS 29.12
4 ,, 64.26 धेन्वादीन्युत्तरत:... वासो हिरण्यं च ।
5 KS 50.15 उपोत्तमेन सुहृदो ब्राह्मणस्य शकृत्पिण्डान् पर्वस्वाधाय.... पृच्छति ।
6 KS 71.15 उत्तमवर्जं ...
7 cf KS 8.16
8 KS 17.25
9 ,, 11.18
10 AV 4.7
11 ,, 7.74
12 ,, 7.80
13 KS 32.8
14 ,, 59.19 धाता दधातु प्रजापतिर्जनयत्यन्वद्य नो यज्ञ इन्द्रो ययोरोजसा विष्णोर्नु कमग्नाविष्णू सोमारुद्रा सिनीवाली बृहस्पतिर्नो यत्ते देवा अकृण्वन् ... को अस्या न इति प्रजापतिम् ।
15 cf AV 7.74.1-2
16 AV 7.76.1
17 ,, 7.74.3
18 cf KS 36.25
19 AV 7.74.4
20 KS 1 34
21 ,, 19.14
22 AV 7.75.
23 ,, 7.75.2

43.1 AV 7.80.3
2 cf DB *p.* 1, *l.* 12– *p.* 2, *l.* 4
3 AV 8.8.2
4 KS 16.11–12
5 ,, 138.6. cf note 5 on *p.* 1
6 AV 3.10.10
7 ,, 11.3.26
8 ,, 11.3.32
9 ,, 11.3.33

10 AV 11.6.23
11 KS 58.25
12 AV 11.6
13 KS 60.20-21 यजमानश्च in sūtra 21 is given as the correct reading instead of यजमानं च ।
14 KS 63.12
15 „ 60.1 अग्नीनाधास्यमानः सवान् वा दास्यन् संवत्सरं ब्रह्मौदनिकमग्निं दीपयति ।
16 KS 69.1 पित्र्यमग्निं शमयिष्यञ्ज्येष्ठस्य चाविभक्तिन एकाग्निमाधास्यन् ।
17 KS 75.1 अथ विवाहः ।
18 „ 80.1 अथ पितृमेधं व्याख्यास्यामः ।
19 cf AV 12.5.47–50
20 AV 3.12
21 „ 6.73
22 „ 6.93
23 „ 12.1

24 KS 43.4
25 AV 12.2.63
26 „ 2.2
27 „ 6.111
28 „ 8.6

44.1 KS 26.29
2 AV 1.7
3 „ 1.8
4 „ 2.14
5 „ 2.18.3
6 „ 2.25
7 „ 4.20
8 „ 4.36
9 „ 4.37
10 „ 5.29
11 „ 8.3-4
12 KS 25.22

13 cf KS 8.7; also 63.17 समुच्चयस्तुल्यार्थानां विकल्पो वा ।
14 KS 28.9-10
15 „ 8.21
16 AV 1.4
17 „ 2.14
18 „ 1.5
19 „ 1.6
20 P 2.2.34 अल्पाच्तरम् ।
21 AV 3.21.1-7; cf KS 71.8 ..... हिरण्यपाणिम् (AV 3.21.8-10) इति शमयति ।
22 AV 4.23
23 „ 4.30
24 KS 10.16
25 AV 4.28-29
26 KS 27.34
27 AV 6.24
28 KS 30.13

29 AV 6.62
30 KS 41.14
31 AV 7.52
32 „ 7.69
33 „ 6.10
34 „ 1.4
35 „ 4.13
36 cf KS 9.10-11
37 KS 43.5

45.1 cf KS 43.4
2 GB 1.1.34; KS 56.8 अथैनं बद्धमेखलमाहितसमित्कं सावित्रीं वाचयति ।
3 AV 1.6
4 „ 4.8
5 KS 17.1
6 cf KS 8.23
7 „ „ 9.10-11
8 KS 53.1 आयुर्दा इति गोदानं कारयिष्यन् संभारान् संभरति ।
9 KS 69.1 पित्र्यमग्निं शमयिष्यन् ज्येष्ठस्य चाविभक्तिन...

46.1 AV 1.1
2 KS 7.8
3 cf DB *p*.9, *ll.* 17-19
4 AV 10.3-11
5 cf KS 7.15
6 KS 3.18
7 „ 73.13 उभौ च संधिजौ यौ वै वैश्वदेवौ यथर्त्विजौ । वर्जयित्वा सर्वाहिषः साज्या यज्ञाः सदक्षिणाः ।
8 cf KS 8.5
9 „ „ 7.4
10 „ „ 138.15 न दर्विहोमे न हस्तहोमे न पूर्णहोमे तन्त्रं क्रियेतेत्येके ।
11 cf KS 7.5
12 KS 4.11
13 cf KS 7.6
14 P 4.2.37 तस्य समूहः and 38 भिक्षादिभ्योऽण् ।
15 KS 7.16
16 P 2.3.13 चतुर्थी संप्रदाने ।
17 cf KS 56.12 मा दिवा स्वाप्सीः ।
18 cf Nir 1.9 कर्णः कृन्ततेः निकृत्तद्वारो भवति । also cf Nir 2.4

47.1 KS 8.5
2 AV 4.30
3 „ 1.2
4 KS 10.1
5 „ 47.1; 14.1
6 „ 14.7
7 AV 5.1.3
8 KS 21.12
9 AV 5.1.1
10 P 2. 2. 29

11 cf P 1.4.45 आधारोऽधिकरणम् ।
12 AV 3.8; cf KS 55.18 अथापि परिस्वरमाण आ धातु मित्र इत्यपि खल्वेतावतैवोपनीतो भवति ।
13 cf KS 57.31 मेधाजनन मायुष्यैर्जुहुयात् ।

48.1 cf P 5 1.109 प्रयोजनम् ।
2 AV 6.108
3 „ 12.1.13
4 cf KS 7.6
5 AV 7.61.1-3
6 AV 3.16
7 „ 6.69
8 „ 9.1
9 „ 4.30
10 KS 7.29
11 cf KS 18.19-24.45
12 „ „ 18.1
13 KS 10.4-6
14 „ 10.7
15 ŚB 11.3.3.7
16 KS 8.8
17 cf KS 138.15 न दर्विहोमे न हस्तहोमे ...

49.1 KS 11.11
2 „ 7.16
3 „ 10.4
4 „ 10.6
5 cf ŚB 3.8.3.7 त्रिष्कृत्व: पृच्छति त्रिवृद्धि यज्ञ: ।
6 KS 8.20

50.1 AV 1.9
2 „ 1.35
3 „ 5.28
4 P 5.1.57
5 AV 5 11
6 VaitānaŚS 19.5 प्रस्थितैश्चरिष्यन्नध्वर्यु: संप्रेष्यति होतर्यज प्रशास्तर्ब्राह्मणाच्छंसिन् पोतर्नेष्टरग्नीदिति ।
7 KS 8.15-16
8 „ 8.8
9 AV 6.10
10 „ 13.1.33
11 KS 11.12-15
12 „ 11.11
13 AV 3.30
14 „ 5.1.5
15 „ 6.64
16 „ 6.73
17 „ 6.74
18 „ 6.94
19 „ 7.52
20 „ 1.1

51.1 AV 6.74
2 KS 7.13
3 „ 7.16
4 „ 7.8; AV 1.1
5 AV 5.3
6 KS 10.4-6
7 cf KS 11.11
8 „ „ 21.13
9 „ „ 44.15-35
10 AV 3.16
11 „ 6.69
12 „ 9.1

52.1 Nighaṇṭu 2.7.27
2 cf GDS 4.19 सृष्टयन्तरजातानां च ।
3 KS 12.14
4 cf KS 8.10
5 AV 6.38
6 „ 6.39
7 GobhilaGS 3.5.21-23 तत्रैते त्रयः स्नातका भवन्ति । विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति । तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्वौ ।
8 cf KS 63.17 समुच्चयस्तुल्यार्थानां विकल्पो वा ।
9 AV. 3.16
10 „ 6.69
11 „ 9.1
12 GDS 2.8.27

53.1 KS 7.26
2 P 5.1.57 तदस्य परिमाणम् ।
3 cf Nir 4.19 उदकं रज उच्यते ।
4 cf P 2.1.9 सुप् प्रतिना मात्रार्थे ।
Kāś on this : मात्रा बिन्दुः स्तोकमल्पमिति पर्यायाः ।
5 AV 12.1.23-25
6 cf KS 13.9
7 cf KS 17.31
8 „ „ 17.1
9 KS 17.30
10 „ 17.28
11 AV 8.8; cf KS 16.9
12 „ 8.8.24; cf KS 16.18
13 „ 8.8.24; cf KS 16.19
14 „ 8.8.24; cf KS 16.20
15 cf KS 6.34
16 KS 3.15
17 P 2.3.23 हेतौ ।
18 cf P 5.1.111 अनुप्रवचनादिभ्यश्छः ।
The Gaṇa is: अनुप्रवचन...अनुवासन ...अन्वारोहण ..

54.1 AV 1.2
2 „ 1.19
3 „ 1.20

